महानिशा तु विज्ञेया मध्यस्थप्रहरद्वयम् ।
प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत् ॥
चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥
अस्थिसञ्चयनात् पूर्वं रुदित्वा स्नानमाचरेत् ।
अन्तर्दशाहे विप्रस्य पूर्वमाचमनं भवेत् ॥
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।
सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु ॥
कुशपूतन्तु यत्स्नानं कुशेनोपस्पृशेद्द्विजः ।
कुशेनोद्धृततोयं यत् सोमपानसमं स्मृतम् ॥
अग्निकार्य्यात् परिभ्रष्टाः सन्ध्योपासनवर्जिताः ।
वेदञ्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥
तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः ।
अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते ॥
शूद्रान्नरसपुष्टस्याप्यधीयानस्य नित्यशः ।
जपतो जुह्वतो वापि गतिरूर्द्ध्वा न विद्यते ॥
शूद्रान्नं शूद्रसम्पर्कः शूद्रेण तु सहासनम् ।
शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥
मृतसूतकपुष्टाङ्गो द्विजः शूद्रान्नभोजने ।
अहं तां न विजानामि कां कां योनिं गमिष्यति ॥
गृध्रो द्वादश जन्मानि दश जन्मानि शूकरः ।
श्वयोनौ सप्तजन्म स्यादित्येवं मनुरब्रवीत् ॥
दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥

मौनव्रतं समाश्रित्य आसीनो न वदेद्द्विजः।
भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेत्॥
अर्द्धे भुक्ते तु यो विप्रस्तस्मिन् पात्रे जलं पिबेत्।
हतं दैवञ्च पित्र्यञ्च आत्मानञ्चोपघातयेत्॥
भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः।
न देवा तृप्तिमायान्ति निराशाः पितरस्तथा॥
गृहस्थस्तु यदा युक्तो धर्ममेवानुचिन्तयेत्।
पोष्यधर्मार्थसिद्ध्यर्थं न्यायवर्त्ती सुबुद्धिमान्॥
न्यायोपार्जितवित्तेन कर्त्तव्यं ह्यात्मरक्षणम्।
अन्यायेन तु यो जीवेत् सर्वकर्मबहिष्कृतः॥
अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्रं पुनन्त्येते तस्मात् पश्येत्तु नित्यशः॥
अरणिं कृष्णमार्जारश्चन्दनं सुमणिं घृतम्।
तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत्॥
गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम्।
तत्तेत्रं दशगुणितं गोचर्म परिकीर्त्तितम्॥
ब्रह्महत्यादिभिर्मर्त्यो मनोवाक्कायकर्मजैः।
एतद्गोचर्मदानेन मुच्यते सर्वकिल्बिषैः॥
कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः।
यद्दानं दीयते तस्मै तदायुर्वृद्धिकारकम्॥
आषोड़शदिनादर्वाक् स्नानमेव रजस्वला।
अत ऊर्द्धं त्रिरात्रं स्यादुशना मुनिरब्रवीत्॥
युगं युगद्वयञ्चैव त्रियुगञ्च चतुर्युगम्।





चाण्डालसूतिकोदक्यापतितानामधः श्वमात्॥
ततः सन्निधिमात्रेण सचेलं स्नानमाचरेत्।
स्नात्वावलोकयेत् सूर्य्यमज्ञानात् स्पृशते यदि॥
वापीकूपतड़ागेषु ब्राह्मणो स्नानदुर्बलः।
तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम्॥
यस्तु क्रुद्धः पुमान् भार्य्यां प्रतिज्ञायाप्यगम्यताम्।
पुनरिच्छति ताज्ञन्तु विप्रमध्ये तु श्रावयेत्॥
श्रान्तः क्रुद्धस्तमोभ्रान्त्या क्षुत्पिपासाभयार्द्दितः।
दानं पण्यमकृत्वा च प्रायश्चित्तं दिनत्रयम्॥
उपस्पृशेत्त्रिषवणं महानद्युपसङ्गमे।
चीर्णान्ते चैव गां दद्याद्ब्राह्मणान् भोजयेद्दश॥
दुराचारस्य विप्रस्य निषिद्धाचरणस्य च।
अन्नं भुक्त्वा द्विजः कुर्य्याद्दिनमेकमभोजनम्॥
सदाचारस्य विप्रस्य तथा वेदान्तवादिनः।
भुक्त्वान्नं मुच्यते पापादहोरात्रन्तु वै नरः॥
ऊर्द्ध्वोच्छिष्टमधोच्छिष्टमन्तरीक्षमृतौ तथा।
कृच्छ्रत्रयं प्रकुर्व्वीत आशौचमरणे तथा॥
कृच्छ्रं देव्ययुतञ्चैव प्राणायामशतत्रयम्।
पुण्यतीर्थे नार्द्रशिरः स्नानं द्वादशसंख्यया।
द्वियोजनं तीर्थयात्रा कृच्छ्रमेवं प्रकल्पितम्॥
गृहस्थः कामतः कुर्य्याद्रेतसः सेचनं भुवि।
सहस्रन्तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह॥
चातुर्वेद्योपपन्नस्तु विधिवद्ब्रह्मघातके।

समुद्रसेतुगमनप्रायश्चित्तं विनिर्द्दिशेत् ॥
सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत् ।
वर्जयित्वा विकर्मस्थांश्छत्रोपानद्विवर्जितः ॥
अहं दुष्कृतकर्मा वै महापातककारकः ।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥
गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च ।
तथा वनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥
एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम् ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ॥
रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम् ।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ॥
यजेत वाश्वमेधेन राजा तु पृथिवीपतिः ॥
पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति ।
सपुत्रः सह भृत्यैश्च कुर्य्याद्ब्राह्मणभोजनम् ॥
गाश्चैवैकशतं दद्याच्चातुर्वेद्येषु दक्षिणाम् ।
ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते ॥
सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत् ॥
मद्यपश्च द्विजः कुर्य्यान्नदीं गत्वा समुद्रगाम् ॥
चान्द्रायणे ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम् ।
अनडुत्सहितां गाश्च दद्याद्विप्रेषु दक्षिणाम् ॥
अपहृत्य सुवर्णं तु ब्राह्मणस्य ततः स्वयम् ।
गच्छेन्मुषलमादाय राजाभ्यासं बधाय तु ॥
ततः शुद्धिमवाप्नोति राज्ञासौ मुक्तएवच ।

कामकारकृतं यत् स्यान्नान्यथा वधमर्हति ॥

आसनाच्छयनाद्यानात् सम्भाषात् सहभोजनात् ।
संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि ॥

चान्द्रायणं यावकश्च तुलापुरुष एव च ॥
गवाञ्चैवानुगमनं सर्वपापप्रणाशनम् ॥

एतत् पाराशरं शास्त्रं श्लोकानां शतपञ्चकम् ।
द्विनवत्या समायुक्तं धर्मशास्त्रस्य संग्रहः ॥

यथाध्ययनकर्माणि धर्मशास्त्रमिदं तथा ।
अध्येतव्यं प्रयत्नेन नियतं स्वर्गगामिना ॥

इति पाराशरे धर्मशास्त्रे द्वादशोऽध्यायः ॥

समाप्ता चेयं पराशरसंहिता ॥

## अथ वृहत्पराशरसंहितायाम् ।

### प्रथमोऽध्यायः ।

व्यक्ताव्यक्ताय देवाय वेधसेऽनन्ततेजसे ।
नमस्कृत्वा प्रवक्ष्यामि धर्मान् पाराशरोदितान् ॥
अथातो हिमशैलाग्रे देवदारुवनाश्रमे ।
व्यासमेकाग्रमासीन ऋषयः प्रष्टुमागताः ॥
मानुषाणां हितं धर्मं वर्त्तमाने कलौ युगे ।
वर्णानामाश्रमाणाञ्च किञ्चित्साधारणं वद ॥
युगे युगेषु ये प्रोक्ता धर्मा मन्वादिभिर्मुने ।
शक्यं नैव ते कर्त्तुं वर्णैराश्रमवासिभिः ॥
स पृष्टो मुनिभिर्व्यासो मुनिभिः परिवेष्टितः ।
प्रष्टुं जगाम पितरं धर्मान् पाराशरं ततः ॥
सर्वेषामाश्रमाणाञ्च वरे वदरिकाश्रमे ।
स विवेशाश्रमे तस्मिन् तनुं योगीव वेधसः ॥
नानापुष्पलताकीर्णे फलपुष्पैरलङ्कृते ।
नदी प्रस्रवणानेकैः पुण्यतीर्थोपशोभिते ॥
मृगपक्षिभिराकीर्णे देवतायतनावृते ।
यक्षगन्धर्वसिद्धैश्च नृत्यगीतसमाकुले ॥

तस्मिनृषिसभामध्ये शक्तिपुत्रः पराशरः ।
सुखासीनो महातेजा मुनिमुख्यगणावृतः ॥
कृताञ्जलिपुटो भूत्वा व्यासस्तु मुनिभिः सह ।
प्रदक्षिणाभिवादैश्च मुनिभिः प्रतिपूजितः ॥
ततः सन्तुष्टमनसा पाराशरमहामुनिः ।
व्यासस्य स्वागतं ब्रूयात् आसीनो मुनिपुङ्गवः ॥
वशस्य स्वागतं तेन आसीनानां समन्ततः ।
कुशलं कुशलेत्युक्त्वा व्यासः पृच्छ ततः परम् ॥
यदि जानासि मां भक्तं स्नेहोवा यदि वत्सलः ।
धर्मं कथय मे तात ! अनुग्राह्यो ह्यहं यदि ॥
श्रुतास्तु मानवा धर्मा गार्गीया गौतमास्तथा ।
वाशिष्ठाः काश्यपाश्चैव तथा गोपालकस्य च ॥
आत्रेया विष्णुसम्वर्त्ता दाक्षाश्चाङ्गिरसस्तथा ।
शातातपाश्च हारीतयाज्ञवल्क्यकृतास्तथा ॥
आपस्तम्बकृता धर्माः शङ्खलिखितास्तथा ।
कात्यायनकृताश्चैव प्रचेतसकृतास्तथा ॥
श्रुतिरात्मोद्भवा तात ! श्रुत्यर्था मानवाः स्मृताः ।
मन्वर्थं सर्वधर्माणां कृतादि त्रियुगेषु च ॥
धर्मन्तु त्रियुगाचारं न शक्यन्तु कलौ युगे ।
वर्णानामाश्रमाणाञ्च किञ्चित्साधारणं वद ॥
व्यासवाक्यावसानेतु मुनिमुख्यः पराशरः ।
सुखासीनो महातेजा इदं वचन मब्रवीत् ॥
क्रियन्ते नैव वेदाश्च नैवाति प्रभवन्ति ते ।
न कश्चिद्वेदकर्त्तास्ति वेदस्मर्त्ता चतुर्मुखः ॥

तथा सधर्मं स्मरति कल्पे कल्पान्तरान्तरे।
अन्ये कृतयुगे धर्मा त्रेतायां द्वापरे परे॥
अन्ये कलियुगे नृणां युगह्रासानुरूपतः।
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते॥
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे।
कृते तु मानवा धर्मा त्रेतायां गौतमस्य च॥
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः।
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्॥
द्वापरे कुलमेकन्तु कर्त्तारञ्च कलौ युगे।
कृते सम्भाष्य पतितं त्रेतायां स्पर्शनेन च॥
द्वापरे भक्षणोऽन्नस्य कलौ पतति कर्मणा।
अभिगम्य कृते दानं त्रेतास्वाहूय दीयते॥
द्वापरे याच्यमानन्तु सेवया दीयते कलौ।
अभिगम्योत्तमन्दानम् आहूतञ्चैव मध्यमम्॥
अधमं याच्यमानं स्यात् सेवादानञ्च निष्फलम्।
कृते त्वस्थिगताः प्राणा त्रेतायां मांस मेव च॥
द्वापरे रुधिरं यावत्कलौ त्वन्नाद्यमेव च।
कृते तात्क्षणिकः शाप त्रेतायां दशभिर्दिनैः॥
मासेन द्वापरे श्रेयः कलौ सम्वत्सरेण तु।
युगे युगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः॥
ते द्विजा नावमन्तव्या युगरूपा द्विजोत्तमाः।
धर्मश्च सत्यमायुश्च तुर्य्यांशेन कलौ युगे॥
अदत्तादानदम्भश्च तुच्छमासुरकार्य्यतः।
धर्मश्च लोकदम्भार्थं पाषण्डाद्यं तपस्विनः॥

विविधा वाग्वञ्चनार्थं कलौ सत्यानुसारिणी।
अल्पक्षीरप्रदा गावो ह्यल्पसस्या च मेदिनी॥
स्त्रीजनस्य स्त्रियः सर्वा रत्यर्थं कृतमैथुनाः।
पुरुषाश्च जिताः स्त्रीभी राजानो दस्युभिर्जिताः॥
जितो धर्मश्च पापेन अनृतेन तथा ऋतम्।
शूद्राश्च ब्राह्मणाचाराः शूद्राचारास्तथा द्विजाः॥
अन्त्यानुयायिनश्चाद्या वर्णास्तदुपजीविनः।
कृतन्तु ब्राह्मणयुगं त्रेता तु क्षत्रियं युगम्॥
वैश्यन्तु द्वापरयुगं कलिः शूद्रयुगं स्मृतम्।
चातुर्वर्णिकनारीणां तथा तृतीयजन्मनी॥
इतिद्विजाभ्युपाख्यादि धर्मश्चि मंस्ती कलौ॥
शनि नयाकृते दक्षे फलाप्तिः पुरुषस्य सा॥
दक्षेषु दशभिर्नृणां फलाप्तिः स्यात् कलौ युगे।
युगस्वरूपमाख्यातमन्यं निगदतः शृणु॥
वर्णानामाश्रमाणाञ्च सर्वेषां धर्मसाधनम्।
मृगः कृष्णश्चरेद्यत्र स्वभावेन महीतले॥
वसेत्तत्र द्विजातिस्तु शूद्रो यत्र तु तत्र तु।
हिमपर्वतविन्ध्याद्री विनाशेन प्रयागयोः॥
मध्येतु पावनोद्देशो म्लेच्छदेशस्ततः परम्।
देशेष्वन्येषु या नद्यो धन्याः सागरगाः शुभाः॥
तीर्थानि यानि पुण्यानि मुनिभिः सेवितानि च।
वसेयु स्तदुपान्तेऽपि समिच्छन्ता द्विजातयः॥
मुनिभिः सेवितत्वाच्च पुण्यदेशः प्रकीर्तितः।
यत्र पानं नपेयस्य देशेऽभक्षस्य भक्षणम्॥

अगम्यागामिता यत्र तं देशं परिवर्जयेत् ।
एवं देशः समाख्यातो यत्नीय स्तु द्विजन्मनाम् ॥
एव मेवानुवर्त्तेरन्देशं धर्मानुकाङ्क्षिणः ।
वसन्वा यत्र तत्रापि स्वाचारं न निवर्जयेत् ॥
षट्कर्माणि च कुर्वीरन् इति धर्मस्य निश्चयः ।
पराशरः स्वयम्प्राह शास्त्रं पुत्रस्य वत्सलः ॥
अथातः सम्प्रवक्ष्यामि द्विजकर्मादिकं द्विजाः ! ।
षट्कर्म वर्ण धर्माश्च प्रशंसा गो वृषस्य च ॥
अद्दोह्यवाह्यौ यौ तत्र क्षीरं क्षीरप्रयोक्रिया ।
अमावास्यानिषिद्धानि ततश्च पशुपालनम् ॥
अन्नतोयप्रशंसा च वाह्या वाह्या वसुन्धरा ।
अथार्थक्षयतोऽपापं तदप्यस्यापि शोधनम् ॥
वह्निं सिता मखस्यापि विवाहः कन्यका वराः ।
स्त्रीषु धर्मो मखः पञ्च द्विजातिस्वर्गसाधनात् ॥
विधिः प्राणोऽग्निहोत्रस्य आधानादिकसंस्कृतिः ।
व्रतचर्य्यादि तद्धर्माः प्रशंसा पुत्रजन्मनः ॥
कृत्स्नो गृहस्थधर्मश्च भक्ष्याभक्ष्यं तथैवच ।
निषिद्ध वस्तुक्रयणं पात्रशुद्धि स्तथा पुनः ॥
द्रव्याणाञ्च तथाशुद्धिरुपाकर्माणि कर्म च ।
अनध्याया स्तथा श्राद्धं विप्रा ! कालश्चविर्युतम् ॥
बलिर्नारायणीयञ्च सूतकाशौच मेव च ।
परिषत्प्रायश्चित्तानि सद्व्रताति यथा द्विजाः ! ॥
विधिवत्सर्वदानानि तेषाञ्चैव फलानि च ।
भूमिदानप्रशंसा च विशेषो विप्रकालयोः ॥

इष्टापूर्त्तौ तथा विद्वन्! पृथक्कृतयोः फलानि च।
प्रतिग्रहविधिं सद्वद्यथा तस्य प्रतिग्रहः॥
विनायकादिशान्तीनां विधयश्च द्विजोत्तमाः!।
वानप्रस्थस्य धर्मोऽपि तथा धर्मो यतेरपि॥
चतुराश्रमभेदोऽपि वपुर्निन्दा तथैव च।
योगोऽर्चिर्धूमयोर्मार्गौ कालं कृद्रान्तमेव च॥
इष्टस्य तत्परं ध्येयं सर्वमेतत्पराशरः।
प्रोक्तवान् व्यासमुख्यानां शेषं मुनिर्विभाषितम्॥
नियुक्तः सुव्रतः शेषं विप्राणां ख्यापनाय च।
पराशरो व्यास वचो निशम्य
यदाह शास्त्रं चतुराश्रमार्थम्।
युगानि रूपञ्च समस्तवर्णा
हिताय वक्ष्यत्यथ सुव्रतस्तत्॥
शक्तिसूनो रनुज्ञातः सुतपाः सुव्रतस्त्विदम्।
चतुर्वर्णाश्रमाणाञ्च हितं शास्त्रं मयाब्रवीत्॥

इति श्रीबृहत्पाराशरीये धर्मशास्त्रे व्यासप्रश्ने शास्त्रसंग्रहोद्देशकथनं नाम प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः।

पराशरमतं पुण्यं पवित्रं पापनाशनम्।
चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च॥
चतुर्णामपि वर्णाना माचारो धर्मपालनम्।
आचारभ्रष्टदेहानां भवेद्धर्मपराङ्मुखः॥

षट्कर्माभिरतो नित्यं देवतातिथिपूजकः।
हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति ॥
कर्माणि कानीह कथञ्चितानि
कार्याणि वर्णैश्च किमाद्यकानि।
तेषा मनेहाकरणे विधिश्च
सर्वं प्रसादात्प्रतनुष्व मह्यम् ॥
कर्मषट्कं प्रवक्ष्यामि यत् कुर्वन्ति द्विजातयः।
गृहस्था अपि मुच्यन्ते संसारे बन्धहेतुभिः ॥
यथोद्दिष्टक्रमं शास्त्रं यच्छ्रुतं श्रुतिहर्षकृत्।
तदुक्तं कर्म तत् पुंसां शृणुध्वं पापनाशनम् ॥
सन्ध्या स्नानं जपश्चैव देवतानाञ्च पूजनम्।
वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने ॥
सन्ध्यामथ प्रवक्ष्यामि देवताकालनामभिः।
वर्णर्षिच्छन्दसा युक्तं यद्विधानं यथार्चनम् ॥
यावन्मन्त्रा यथोपास्ति रुपस्पर्शनमेव च।
आवाहनं विसर्गश्च यावन्मानं क्रमेणतु ॥
दिवसस्य च रात्रेश्च सन्धिः सन्ध्येति कीर्त्तिता ॥
सोपास्या सद्द्विजैर्यत्नात् स्यात्तैर्विश्वमुपासितम्।
मध्याह्नेऽपि च सन्धिः स्यात् पूर्वस्याह्नः परस्परम् ॥
पूर्वाह्णो ह्यपराह्णस्तु त्रये चेति श्रुतिक्रमात्।
पूर्वसन्ध्या तु गायत्री ब्राह्मणी हंसवाहना ॥
रक्तपद्माननी देवी रक्तपद्मासनस्थिता।
रक्ताभरणभासाङ्गी रक्तमाल्याम्बरा तथा ॥
अक्षमालाभृता धारा चारुहस्ताऽमरार्च्चिता।

प्रागादित्योदयाद्विद्वान् मुहूर्त्ते वैधवे सति ॥
उत्थायोपासयेत्सन्ध्यां यावत्स्यादर्कदर्शनम् ।
विश्वमातः ! सुराभ्यर्च्चे ! पुण्ये ! गायत्रि ! वैधसि !
आवाहयाम्युपास्त्यर्थं एह्येनोऽस्मि पुनीहि माम् ।
सन्ध्या माध्याह्निका श्वेता सावित्री रुद्रदेवता ॥
वृषेन्द्रवाहना देवी बालत्रिशिखधारिणी ।
श्वेताम्बरधरा श्वेता नानाभरणभूषिता ॥
श्वेतस्रगम्बमालापि कृतानुरक्तशङ्करा ।
जलाधारा धरा धात्री धरेन्द्राङ्गभवाभवा ॥
स्वभाविभातभूराद्या सुरौघनुतपादृद्वया ।
मातर्भवानि ! विश्वेशि ! विश्वविश्वजनार्चिते ! ॥
शुभे ! वरे ! वरेण्या हि आहूता हि पुनीहि माम् ॥
सन्ध्या सायन्तनी कृष्णा विष्णुदेवा सरस्वती ।
स्वर्गगा कृष्णवस्त्रा तु शङ्खचक्रगदाधरा ॥
कृष्णभूभूषणैर्युक्ता सर्वज्ञानमया वरा ।
सर्ववाग्देवता सर्वा ब्रह्मादिवचसि स्थिता ॥
वीणाक्षमालिका चारुहस्ता स्मिता वरानना ।
चतुर्दशजनाभ्यर्च्या कल्याणी शुभकप्रदा ॥
मातर्वाग्देवते ! देवि ! वरेण्ये ! च वरप्रदे ! ।
सर्वमङ्गलमूर्त्ये ! आहूते ! हि पुनाहि माम् ॥
ब्रह्मेशार्कहरीशानां सङ्गमोऽस्तूभयोर्भवेत् ।
माध्याह्निकायां सन्ध्यायां सर्वदेवसमागमः ॥
पूजाभिकाङ्क्षिणो येच येच क्रियज्ञनार्थिनः ।
आज्यान्नभागधेया ये येचाग्निहुतभागिनः ॥

अन्यान्युच्चावचानीह स्थावराणि चराणि च ।
माध्याह्निकामुपेक्षन्ते तेषामाप्यायिका हि सा ॥
यस्तस्यां नार्चयेद्देवान् तर्पयेत पितॄंस्तथा ।
भूतान्युच्चावचानीह सोऽन्धतामिस्रमृच्छति ॥
दक्षिणाभिमुखो भूत्वा द्विजः पूर्वमुखोऽपि वा ।
सन्ध्यामुपासयेद्यद्वत्तथावत्तन्निबोधत ॥
आमणिबन्धनाद्धस्तौ पादौ चाजानुतः शुचिः ।
प्रक्षाल्य चाचमेद्विद्वानन्तर्जानुकरो द्विजः ॥
निर्मलात् फेनपूताभिर्मनोज्ञाभिः प्रयत्नवान् ।
आचमेद्ब्रह्मतीर्थेन पुनराचमनाच्छुचिः ॥
वक्त्रनिर्मार्जनं कृत्वा द्विस्तेनैवाधराण्यथा ।
अद्भिश्च संस्पृशेत् खानि सर्वाण्यपि विशुद्धयेत् ॥
अङ्गुष्ठेन प्रदेशिन्या सव्यपाणिस्थवारिणा ।
घ्राणं संस्पृश्य नेत्रे च तेन नामिकया श्रुती ॥
नाभिञ्च तत्कनिष्ठाभ्यां वक्षः करतलेन च ।
शिरः सर्वाभिरंशौ च अङ्गुल्यग्रैश्च संस्पृशेत् ॥
अनस्य प्राणसंरोधं कृत्वा चोपस्पृशेत्पुनः ।
अत्रोपस्पर्शने मन्त्रं प्रातः केचित्पठन्ति हि ॥
सूर्य्यश्च मेति मध्याह्ने पुनस्त्वापो विपर्य्ययम् ।
मन्त्राभिमन्त्रितं कृत्वा कुशपूतञ्च तज्जलम् ॥
आचम्य विधिवद्धीमान् सन्ध्योपासनमाचरेत् ॥
सोङ्कारां चैव गायत्रीं जप्त्वा व्याहृतिपूर्वकम् ।
आपोहिष्ठादि जल्पन्ति छन्दोदेवर्षिपूर्वकम् ॥
छन्दोभिर्विनियोगैश्च मन्त्रब्राह्मणसंयुतम् ।

एतद्धीनं न कुर्वीत कुर्य्यात् चेत्तत्तदासुरम् ॥
मृत्युभीतैः पुरा देवैरात्मनश्छादनाय च ।
छन्दांसि संस्मृतानीह छादितास्तैरतोऽमराः ॥
छादनाच्छन्द उद्दिष्टं वाससी कृत्तिरेव वा ।
छन्दोभिरावृतं सर्वं विद्या सर्वत्र नाम्यतः ॥
यस्मिन्मन्त्रे तु ये देवा स्तेन मन्त्रेण चिह्नितम् ।
मन्त्रं यद्दैवतं विद्यात् सवितुस्तत्र देवता ॥
येन यदृषिणा दृष्टं सिद्धिः प्राप्ता तु येन वै ।
मन्त्रेण तस्य संप्रोक्तो मुनेर्भावस्तदात्मकः ॥
यत्र कर्मणि चारब्धे जपहोमार्चनादिके ।
क्रियते येन मन्त्रेण विनियोगस्तु स स्मृतः ॥
अस्य मन्त्रस्य चार्थोऽयमयं मन्त्रोऽनुवर्त्तते ।
तत्तस्य ब्राह्मणा ज्ञेयं मन्त्रस्येति श्रुतिक्रमः ॥
एतद्धि पञ्चकं ज्ञात्वा क्रियते कर्म यद्द्विजैः ।
तदनन्तफलं तेषां भवेद्वेदनिदर्शनात् ॥
अज्ञात्वैनापि यस्त्वेनं कुर्य्यात् कर्म द्विजोऽपि यः ।
तेनासौ हन्यते कर्त्ताऽस्तौ गन्ताधमश्छति ॥
कुर्वन्नेतो द्विजः कर्म जपहोमादि कञ्चन ।
नाप्नोति तस्य फलमिच्छेत् कर्ममात्रं हि तस्य तत्
आपद्यते स्थाणु गर्तं स्वयं वापि प्रलीयते ।
या तथामानि छन्दांसि भवत्यफलदान्यपि ॥
सिन्धुद्वीप ऋषिश्छन्दो गायत्रीच्छन्द त्रिष्टुप् ।
आपो हि दैवतं प्राक्त रापोहिष्ठादिषु द्विजाः ॥
गोभिलो राजपुत्रस्तु द्रुपदायामृषिर्भवेत् ।

अनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम् ॥
सौत्रामण्यावभृतके विनियोगस्य कल्पितः ॥
उदुत्यमृषिः प्रस्कण्वो गायत्रं सूर्य्यदेवता ।
चित्रमित्यस्य कुत्सस्तु शर्वरी सूर्य्यदेवता ॥
प्रणवो भूर्भुवः स्वश्च गायत्र्यापि ऋचा त्रयम् ॥
अघमर्षणसूक्तस्य ऋषिरेवाघकर्मणा ।
छन्दोऽत्रानुष्टुभं प्राक्त रापश्चैव तु दैवतम् ॥
द्रुपदाघमर्षणं सूक्तं मार्जने व्याहरेदिति ।
स्मृतिभिः परिशिष्टैश्च विशेषस्तोयसेचने ॥
उत्क्षाद्योर्द्वं विभागेन कर्तव्यः सोऽपि स द्विजैः ।
आपोहिष्ठेति तिस्रचं अष्टाचरपदं नव ॥
पादान्ते प्रक्षिपेद्वापि पादमध्येन च क्षिपेत् ।
भूमौ मूर्द्ध्नि तथाकाशे मुद्राकाशे तथा भुवि ॥
एवं वारि द्विजः सिञ्चन् तर्पयेत् सर्वदेवताः ।
उदुत्यंश्चित्रंदेवाना मुपस्थाने नियोजयेत् ॥
हंसः शुचिः सदित्यादि केचिदिच्छन्ति सूरयः ।
अव्याकृतमिदं ह्यासीत् सदेवासुरमानुषम् ॥
सङ्क्षेपायाब्जजः ब्रह्मा सप्तमा व्याहृतीः पुरा ।
भूर्भुवः स्वर्मह र्जनस्तपः सत्यं तथैव च ॥
आद्यास्तिस्रो महाप्रोक्ताः सर्वत्रैव नियोजनात् ।
अग्निर्वायुस्तथा सूर्य्यो बृहस्पत्यापि एव च ॥
इन्द्रश्च विश्वदेवाश्च देवताः समुदाहृताः ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगतीचैव च्छन्दांस्येतान्यनुक्रमात् ।

भरद्वाजः कश्यपश्च गौतमोऽत्रिस्तथैव च ॥
विश्वामित्रो जमदग्निर्वशिष्ठश्च ऋषिः क्रमात्।
एताभिः सकलं व्याप्त मेताभ्यो नास्ति चापरम्॥
सप्तैते स्वर्गलोका वै सत्यादूर्द्ध्वन्नविद्यते।
तस्माल्लोकात्परा मुक्ति रर्व्वाचीना पदेच्छया॥
प्राणसंयमनेष्वेता अभ्यस्याः पूर्व्वकादिभिः।
ॐमापोज्योतिरित्येतच्छिरः पश्चात्प्रयुज्यते॥
प्रत्योङ्कारसमायुक्तो मन्त्रोऽयं तैत्तिरीयके।
अतोङ्कारवदार्षादि विदु र्ब्रह्मविदो जनाः॥
प्रणवाद्यन्त गायत्री प्राणायामेष्वयं विधिः।
गायत्र्यादिकचित्रान्तै र्मन्त्रैश्च प्रागुदीरितैः॥
उपासीरन्द्विजास्तावद्यावन्नोदेति भास्करः।
गवां बालपवित्रेण यस्तु सन्ध्यामुपासते॥
सर्व्वतीर्थाभिषेकं तु लभते नात्र संशयः।
गोबालदर्भमारञ्च खड्गं कनकमेव च॥
दर्भताम्रतिलं वापि एतेस्तर्पणकाद्द्विजाः।
स सन्तर्प्य पितॄन्देवानात्मानं त्रिदिवं नयेत्॥
त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः।
उद्यन्तं ते विवस्वन्तं बलादिच्छन्ति खादितुम्॥
दिने दिने सहस्रांशु र्दुष्टैस्तैरभिद्रुतः।
भानुर्हीनः कृतस्तूर्णं तद्वध्यत्वमिहागतः॥
अतस्तस्य च तेषान्तु ह्यभूद्युद्धं सुदारुणम्।
किं भविष्यति युद्धे ऽस्मिन् नित्यभूसुरविस्मयः॥
अरुणस्य च ये बाणा यद्दलन्तो विवस्वतः।

विलुप्यास्ते निवर्त्तन्ते मन्देहानामदर्शनात्॥
रवेरप्ययतो ह्यस्मात् यातायाता ह्यशक्तितः।
अताप्र अशरीराणां स्वामिनैव लयङ्गताः॥
हेषायश्चमकुर्व्वाणाः शफस्फुरणवर्जिताः।
स्वभ्याङ्गा निर्जयाज्जाताः सूर्य्यस्यन्दनवाजिनः॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः।
यत्सन्ध्यान्ते उपासीन प्रक्षिपन्ति जलं महत्॥
ओँङ्कारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
दह्येरंस्तेन ते दैत्या वज्रिभूतेन वारिणा॥
सहस्रांशुरथे तिष्ठन् योऽधीयानश्च तु श्रुतीः।
याज्ञवल्क्यः समीक्षेत ऋषीणामुक्तवांस्ततः॥
मत्वे त्वनुदिवादित्ये सन्ध्योपास्तिकरो भवेत्।
उदिते सति या सन्ध्या बालक्रीड़ोपमा च सा॥
सन्ध्या येन न विज्ञाता ज्ञात्वा नैव ह्युपासिता।
स जीवन्नेव शूद्रश्च ह्याशु गच्छति मानवः॥
मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च।
वारुणं मानसञ्चेति सप्तैतानु क्रमेण तु॥
शन्न आपस्तु वै मान्त्रं मृदालम्भन्तु पार्थिवम्।
भस्मना स्नानमाग्नेयं गोरेणूनानिलं स्मृतम्॥
आतपे सति या वृष्टि र्दिव्यस्नान तदुच्यते।
बहिर्नद्यादिके स्नानं वारुणं प्रोच्यते बुधैः॥
यत्ध्यानं मनसा विष्णोर्मानसं तत्प्रकीर्त्तितम्।
असामर्थ्येन कायस्य कालशक्त्याद्यपेक्षया॥
तुल्यं फलानि सर्वाणि स्फुरत्याह पराशरः।

स्नानानां मानसंस्थानं मन्वाद्यैः परमं स्मृतम् ॥
कृतेन येन मुच्यन्ते गृहस्था अपितु द्विजाः ।
नित्यादीनां त्रयाणां तु स्नानानामौषधं परम् ॥
सद्यः पापहरं प्राहुः प्राजापत्यव्रताधिकम् ।
उषस्युषसि यत्स्नानं क्रियतेऽभ्युदितेऽरवौ ॥
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ।
प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् ॥
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ।
अस्नानो नाचरेत्कर्म जपहोमादि किञ्चन ॥
विद्यन्ते च सुतप्तानि द्रविणानि स्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवन्ते च दिवारात्रौ प्रातः स्नानेन शुद्ध्यति ॥
उषःस्नानं प्रशंसन्ति सर्वे च पितरोऽमराः ।
दृष्टादृष्टकरं पुण्यं शंसन्ति पितरोऽपि हि ॥
प्रातःस्नायी हि यो विप्रः सोऽर्हः स्यात्सर्वकर्मसु ।
तत्कृतं कर्म यत्किञ्चित्तत्सर्वं स्याद्यथाथवत् ॥
अविद्वान् स्नानकालेषु यः कुर्याद्दन्तधावनम् ।
पापीयान् रौरवं याति पितृणापहतो ध्रुवम् ॥
यच्च श्मश्रुषु केशेषु यद्वा देहे च लोमसु ।
हस्ताभ्यां न वस्त्रेण जलं विद्वान् हि मार्जयेत् ॥
मार्जिते पितरः सर्वे सर्वा अपिच देवताः ।
तथा सर्वे मनुष्याश्च त्यजेरन नियतं द्विजम् ॥
स्नानं सञ्चिन्तितं सर्वे तीर्थं पितृदिवौकसः ।

ततो नद्याद्यसौ गच्छन्निराशा स्ते प्रयान्ति हि ॥
येतु स्नानार्थिनं तीर्थं संप्रियन्ति जलाश्रयाः।
तद्देह सुपतिष्ठन्ति प्रेमे पितृदिवौकसः ॥
अतो न चिन्तयेत्तीर्थं व्रजेदेवतु चिन्तितम्।
देवखातनदीस्रोतःसरःसु स्नान माचरेत् ॥
स्नानं नद्यादि वन्येषु सद्भिः कार्यं सदम्बुषु।
कृत्रिमन्तोयं कूपस्थं तोयं तत्र तु कृत्रिमम् ॥
न तीर्थं व्याकुले स्नायान्न सज्जनसमाश्रमे।
दर्भहीनोऽन्यचित्तस्तु न नग्नो न शिरो विना ॥
कदाचिद्विदुषा मिथ्या न स्नातव्यं परात्मना।
अधःकृष्टु व्रूकतांशेन स्नानकर्त्तापि लिप्यते ॥
पञ्च वा सप्त वा पिण्डान् स्नायादुद्धृत्य तत्र तु।
वृथास्नानादिकामीह विशेषेण विवर्जयेत् ॥
वृथा चोष्णोदकस्नानं वृथा जप्यमवेदिकम्।
वृथा चाश्रोत्रिये दानं वृथा भक्तमसाक्षिकम् ॥
मासे नभसि न स्नायात्कदाचिन्निम्नगासु च।
रजस्वला भवन्त्येता वर्जयित्वा समुद्रगाः ॥
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा।
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ॥
न स्नायात् शोभितास्तासु स्वयं न शोभयेच्च ताः।
न निर्गतासु तीर्थाच्च पतन्तीष्वाहतासु च ॥
रविसंक्रान्तिवारेषु ग्रहणेषु ग्रहक्षये।
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा ॥
न स्नायाच्छूद्रहस्तेन नैकहस्तेन वा तथा।

उष्णाभिरपि स्नाया दाहृताभिर्द्विजातिभिः ॥
स्वभावाभिरनुष्णाभिः नष्टताभिस्तथा द्विजः ।
नवाभिर्निर्दशाभिरसंस्पृष्टाभिरन्त्यजैः ॥
यः स्नानमाचरेन्नित्यं तं प्रशंसन्ति देवताः ।
तस्माद्दशगुणं स्नानं सदा कार्यं द्विजातिभिः ॥
उत्साहाप्यायनस्वान्त प्रशान्तिशक्तिबुद्धिदम् ।
कीर्तिं कान्तिं वपुः पुष्टिं सौभाग्यायुःप्रवर्धनम् ॥
स्वर्गश्च दशभिर्युक्तं गुणैः स्नानं प्रशस्यते ।
सूर्य्यादि दिनवारोक्तं तैलाभ्यञ्जनपूर्वकम् ॥
हृत्तापकीर्त्तिमरण सुतस्थानाग्निसंज्ञकः ।
आयुश्चार्कादिवारेषु तैलाभ्यङ्गे फलं क्रमात् ॥
जलावगाहनं नित्यं स्नानं सर्वेषु वर्णिषु ।
शक्तिरक्षकः कार्यं तस्याथ विधिरुच्यते ॥
गोशकृन्मृत्कुशांश्चैव पुष्पाणि पत्रिकां तथा ।
स्नानार्थो प्रयतोऽनित्यं स्नानकाले सदाहरेत् ॥
स्वमनोऽभिमतं तीर्थं गत्वा प्रक्षाल्य पादयोः ।
हस्तौ चाचम्य विधिवच्छुचावन्त्यैकचेतसा ॥
मृदम्बुभिश्च गात्राणि क्रमात्प्रक्षालयेद्यथा ।
पादौ जङ्घे कटीश्चैव क्रमात्प्राणं जलैस्त्रिभिः ॥
प्रक्षाल्य हस्तौ चाचम्य नमस्कृत्य च तज्जलम् ।
पुण्यापगुत्यम् इत्येतद्यजमा प्रयताञ्जलिः ॥
उक्त देहेतिमन्त्रेण कुर्यादापोऽभिमन्त्रिताः ।
विधिज्ञाः कवयः केचिन्मन्त्र शादिनः ॥
यत्र स्थानेषु यत्तीर्थं नदी पुण्यजला तथा ।

तां ध्यायेन्मनसा नित्यम न्यतीर्थं न चिन्तयेत् ॥
गङ्गादिपुण्यतीर्थानि कृत्रिमादिषु संस्मरेत् ।
तां ध्यायेन्मनसा वापि अन्यतीर्थं न चिन्तयेत् ।
महाव्याहृतिभि: पश्चादाचामेत्प्रयतोऽपि सन् ।
उदुत्तम इतिच्यम् मन्त्रेण प्राङ्मुखो विशेत् ॥
येऽग्नयो दिवि.चेत्ये तत्कुर्य्यादालम्भन न्तत: ।
सूर्य्यं पश्यन् जलं सुक्त्वा रुमुत्तीर्य तत: स्थलम् ॥
आचम्याथ हरेन्मृत्स्नान्तथा कायं समालभेत् ।
अश्वक्रान्ते रथक्रान्त इत्याद्यपि पठन्निति ॥
मृत्तिका हरणे चैव इति वाशिष्ठजोऽब्रवीत् ।
समालभेत्त्रिभिर्मन्त्रै रिदं विष्णादिभिर्द्विज: ॥
शिरश्चांसा वक्ष्. ऊर: पादौ जङ्घं क्रमेणतु ।
भास्कराभिमुखो मज्जेदापो ह्यस्मानिति त्रिभि: ॥
उद्धृत्य सर्वगात्राणि निमज्याथ पुन: पुन: ।
उत्तीर्य्याचम्य गात्राणि गोमयेनाथ लेपयेत् ॥
मानसोक्त इति स्तुत्वा प्राग्वदङ्गक्रमेण तु ।
इमं मे वरुण ! त्वन्न: सत्यं नय उदुत्तमम् ॥
ऋचं त्वबभृथेत्येतैरात्मान मभिषेचयेत् ।
निमज्याचम्य चात्मानं दर्भैर्मन्त्रैश्च पावयेत् ॥
हविष्मतीरिमा आप इदमाप स्तथैवच ।
देवीराप इति द्वाभ्यामापो देवीरितीत्यृचा ॥
संसृत्य द्रुपदां देवीं शन्नो देवीरपां रसम् ।
प्रत्यङ्ग मन्त्रनवकमापो देवी पुनन्तु माम् ॥
चिन्तितं मां पुनात्वेतन्मन्त्रेणापि च पावयेत् ।

हिरण्यवर्णा इति च पावमाना तथापरे ॥
तरत्समन्दि धावन्ति पवित्राण्यानि शक्तितः ।
स्नानकर्मात्मकैर्मन्त्रै रन्यैरप्यम्बु दैवतैः ॥
शाश्वात्मान निमज्याथ आचामस्त्वन्यदाचरेत् ।
कार्यं कायप्रदेशानां तथा चैवोदकस्य च ॥
प्राशस्त्ये सति चैवायं विधिरन्यो विपर्यये ।
सोङ्काराश्चैव गायत्रीं महाव्याहृतिभिः सह ॥
त्रिमग्नं वैकधावत्मां स्नानाद्विद्वानपि द्विजः ।
छन्दोमन्त्रं परैर्युक्तं स्वशाखाक्षरसंयुतम् ॥
आरत्य प्रणवं स्नायाच्छतमर्धशतं दशम् ।
चिद्रूपं परमं ज्योतिर्निरालम्बमनामयम् ॥
अव्यक्तमव्ययं शान्तं स्नायाद्वापि हरिं स्मरेत् ।
गायत्री वारिसंस्नातः प्रणवै निर्मलाकृतः ॥
विष्णुस्मरणा संशुद्धि स्त्यवं सर्वेषु कर्मसु ।
योऽधीते वेदवेदार्थं सुस्नातः सर्ववारिषु ॥
शुद्धे दशुचिनः स्नानस्त च्छुद्धस्तु शुचिर्यतः ।
मन्त्रैश्च मनसा स्नानं सो गोमयमृदम्बुभिः ॥
तैश्चाङ्कुरमत्स्याश्च स्नानस्य फलमाप्नुयुः ।
भाव पूत पवित्रः स्नानात्पूत स्तथा नरः ॥
उभयेन पवित्रस्तु नित्यस्नायी शुचिर्नरः ।
विधिहष्टं तु यत्कर्म करोत् विधिना नरः ॥
न किञ्चित् फलमाप्नोति क्लशमात्रं हि तस्य तत् ।
उत्पद्यन्ते जले मत्स्या विपद्यन्ते तु तत्र च ॥
तिष्ठन्तोऽपि च ते स्नाने फलं नैवाप्नुयुर्यतः ।

विधिहीनं भवेद्दुष्टं कृतमश्रद्धयापि च ॥
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः।
श्रद्धाविधिसमायुक्तं कर्म यत्क्रियते नृभिः ॥
शुचिभिस्तैरकचित्तैस्तु तदनन्त्याय कल्पते।
उदात्तमनुदात्तञ्च विसर्गान्तं तथैवच ॥
द्रुतञ्च स्वरितोदात्तं स्वरं विन्द्यात्तथा प्लुतम्।
स्वरान्तं व्यञ्जनान्तञ्च विसर्गान्तं तथैवच ॥
सानुस्वारं पृथक्काञ्च शातमन्यपरञ्च यत्।
हतं शतक्रतुर्हन्ति वज्रेण शतपर्वणाम् ॥
यथा तथा प्रवक्तारं मन्त्रहीनं स्वरादिभिः।
स्वरतो वर्णतः सम्यक् मन्त्राध्यानजपादिषु ॥
सर्वे मन्त्राः प्रयोक्तव्याः हीनाः स्युरफला नृणाम्।
नाभेरधस्तादङ्गानि क्षालयित्वा मृदम्भसा ॥
उपविष्टः सिक्तवस्त्रे मन्त्रैः प्रोक्ष्य शुचिर्भवेत्।
चतुरश्चतुरस्त्वङ्गो द्वौ द्वौ च जङ्घयोस्तथा ॥
द्वौ द्वौ च जानुनोर्न्यस्य ऊर्वोः पञ्च च पञ्च च।
द्वावप्येवं तथा गुह्ये दश द्वादश वक्षसः ॥
द्वौ द्वौ गले च बाह्वोश्च द्वौ द्वे च सुमुखेष्वपि।
द्वौ द्वौ च चक्षुषोः श्रुत्योः सप्तोङ्कारांश्च मूर्द्धनि ॥
न्यस्तप्रणवसर्वाङ्गः स्नातः स्यात्सर्ववारिषु।
अकारं मूर्ध्नि विन्यस्य उकारं नेत्रमध्यतः ॥
मकारं कण्ठदेशेतु ब्रह्मीभवति वै द्विजः।
अनङ्गक्लिष्टधौतेतु विद्वान् रक्तशससी ॥
परिधाय मृदम्बुभ्यां करौ पादौ च मार्जयेत्।

तद्दाससोरसम्पत्तौ शोणक्षौमाविकानि च॥
कुतपं योगपट्टम्बा द्विवासास्तु यथा भवेत्।
न जीर्णं नीलकाशायां माञ्जिष्ठेन च वाससा॥
मूत्राद्युपगतेनैव शुचिः स्यान्नैकवाससा।
एकं वासो यथा प्राप्तं परिधाय मनः शुचिः॥
अन्ये कृत्वोत्तरामङ्गम् आचम्य प्राङ्मुखः स्थितः।
प्रत्योङ्कारसमायुक्ताः प्रणवाद्युतकास्तथा॥
महाव्याहृतयः सप्त देवतार्षादिसंयुतम्।
प्रणवाद्यन्त गायत्र्या तस्याः शिरस्तथैवच॥
त्रिरावर्त्तनमेतस्याः प्राणायामो विधीयते।
शक्त्या सुसंयमं कृत्वा तथाचम्य विधानतः॥
उपास्य विधिवत्सन्ध्यामुपस्थाय च भास्करम्।
गायत्रीं शक्तितो जप्त्वा तर्पयेद्देवताः पितॄन्॥
अम्बारब्धेन तोयेन पाणिना दक्षिणेन तु।
तृप्यता मिति वक्तव्यं नाम्ना तु प्रणवादिना॥
ब्रह्मेशकेशवान् पूर्वं प्रजापति मथाश्रुतिम्।
छन्दो यज्ञानृषीन् सिद्धानाचार्य्यान् स्तनपायिनः॥
गन्धर्ववत्सरर्त्तूंश्च मासान्दिननिशानि च।
देवान्देवानुगांश्चापि नागान् नागकुलानि च॥
सरितः सागरां स्तीर्थान् पर्वतान् कुलपर्वतान्।
किन्नरान् खेचरान्यक्षान्मनुष्यान्नथ तर्पयेत्॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
आसुरिः कपिलश्चैव वोढः पञ्चशिखस्तथा॥
मानुषान् यातुधानांश्च तेषाञ्चैव कुलान्यपि।

सुपर्णांश्च पिशाचांश्च भूतान्यक्ष पशूंस्तथा॥
वनस्पतींश्चौषधींश्च भूतग्रामं चतुर्विधम्।
ब्रह्मादयो मया हूता आगत्य ददतु त्वपः॥
अनृणं मां प्रकुर्वन्तु प्रसीदन्तु ममोपरि॥
ततः पूर्वाग्रदर्भेषु साग्रेषु सकुशेषु च॥
प्रादेशिकेषु शुद्धेषु ब्रह्मादिभ्योऽम्बु निक्षिपेत्।
अन्वारभ्याथ सव्येन पाणिना दक्षिणेन तु॥
दक्षिणं जानु भूलग्नो देवेभ्यः सेचयेज्जलम्।
देवेभ्यश्च नमः स्वाहा पितृभ्यश्च नमः स्वधा॥
मन्यन्ते कवयः केचिदित्येव तर्पणक्रमः।
तर्पमाणेषु कर्मत्वं निजत्वञ्च क्रियापदम्॥
तर्पयामि पितॄन्देवानित्याङ्करपरे पुनः।
सिच्यमानेन तोयेन मन्यन्ते मुनयोऽपरे॥
देवास्तृप्यन्तु पितरः तृप्यन्त्विति निदर्शनम्।
उदीरतामङ्गिरस अयन्तु नोऽर्जमित्यभि॥
पितृभ्यश्च स्वधायिभ्यो ये चेह नियतास्तथा।
अग्निष्वात्तापहृताश्च तथा बर्हिषदोऽपि च॥
येन पूर्वेच पितरः सोमपाना मुदीरयेत्।
आवाह्य च पितॄनेतैरप्य सव्योपवीतिना॥
दक्षिणाभिमुखो ह्यभ्याङ्कुराभ्या मम्बु सेचयेत्।
भूलग्न सव्यजानुश्च दक्षिणाग्रकुशेषु च॥
रुक्मरौप्यतिलैस्ताम्रदर्भमन्त्रैः क्षिपेत्पयः।
विना रौप्यसुवर्णाभ्यांस्त्विना ताम्रतिलैरपि॥

विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठति ।
दर्भैर्लोहितदर्भैश्च काशवीरणवल्वजैः ॥
शुकधान्यतृणैर्वापि दर्भकार्यं भवेद्द्विजः ।
न तर्पयेत्पतन्तीभिर्विद्वानद्भिः कथञ्चन ॥
पातस्थाभिः सदर्भाभिः सतिलाभिश्च तर्पयेत्
वसून्रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान् ॥
एते च दिव्यपितर एतदायत्तमानुषाः ।
ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानलोऽनिलः ॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ।
अजैकपाद हि र्बुध्नीर्विरूपाक्षोऽथ रैवतः ॥
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ।
सावित्रश्च जयन्तश्च पिनाकीत्यपराजितः ॥
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ।
इन्द्रोधाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा ॥
अंशुर्विवस्वांस्त्वष्टाच सविता विष्णुरेव च ।
एते वै द्वादशादित्या देवानां परमाः स्मृताः ॥
एतश्च दिव्याः पितरः पूज्याः सर्व प्रयत्नतः ।
कव्यवालोऽनलः सोमो यमश्चेव तथार्यमा ॥
अग्निष्वात्ताः सोमपाश्च तथा वर्हिषदोऽपि च ।
एते चान्येच पितरः पूज्याः सर्वे प्रयत्नतः ॥
एतैस्तु तर्पितैः सर्वैः पुरुषास्तर्पिता नृभिः ।
यमश्च धर्मराजश्च मृत्युश्चैव तथान्तकः ॥
वैवस्वतश्च कालश्च सर्व्वभूतक्षयस्तथा ।
औदुम्बरश्च नीलश्च दध्नश्च परमेष्ठिना ॥

चित्रश्च चित्रगुप्तश्च वृकोदर सयार्यमा।
एतैस्तु तर्पितैः सद्भिर्विवस्वांस्तर्पितो नृभिः॥
तस्मात्प्राक् तर्पयित्वैतान् त्रिंशतीन्तर्पयेत्ततः।
मातामहान्मातुलांश्च सखिसम्बन्ध बान्धवान्॥
स्वजनज्ञातिवर्गीयानुपाध्यायान् गुरूनपि।
मित्रान् भृत्यानपत्यांश्च ये भवन्ति तदा स्मृतौ॥
तान् सर्वांस्तर्पयेद्विद्वान् दृश्यन्ते ते यतो जलम्।
जलस्थश्च जले सिञ्चेत् स्थलस्थश्च तथा स्थलम्॥
पादौ स्थाप्याभयश्चैव भवेत्तूभयतः शुचिः।
गोशृङ्गमात्र मुत्क्षिप्य करौ विप्रो जले स्थितः।
अम्बरे तु क्षिपेद्वारि आकाशे दक्षिणामुखः॥
पितृणां स्थानमाकाशं दक्षिणादिक्तथैव च।
स्थलगो नार्द्रवासास्तु कुर्य्याद्वै तर्पणादिकम्॥
प्रेताहुते नार्द्रवासा नैकवासाः समाचरेत्।
एवं हि तर्पणं कृत्वा सर्वेषां विधिवद्द्विजः॥
निष्पीड़येत् स्नानवस्त्रं येन स्नातो भवेद्द्विजः।
निष्पीड़यति यः पूर्वं स्नानवस्त्र मजानतः॥
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः।
निष्पीड़येत् स्नानवस्त्रं तिलदर्भैः समन्वितम्॥
न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः।
एषु चेत्पीड़येद्वस्त्रं राक्षसं तदतिक्रमात्॥
वस्त्रनिष्पीड़ने मन्त्र मिमं श्लोक मुदाहरेत्।

तिलदर्भसमायुक्तं कुर्य्यान्नष्टदेहिनाम् ॥
ये मे कुले लुप्तपिण्डाः पुत्रदाराविवर्जिताः ।
तेषां तु दत्तमक्षय्य मिदमस्तु तिलोदकम् ॥
पितृवंशे मृता येच मातृवंशे तथैवच ।
एवं तृप्तिर्भवेत्तेषां तिलैस्तु सह वारिभिः ॥
यदप्सु मलनिक्षेपः शौचस्नानादि कुर्वताम् ।
तस्य पापव्यपोहार्थमिमं मन्त्र मुदीरयेत् ॥
यन्मया दूषितं तोयं मलैः शारीरसम्भवैः ।
तस्य पापस्य निष्कृत्यै यक्ष्मण स्तत्र तृप्यताम् ॥
यक्ष्मभ्योऽथ यक्ष्मभ्यो ददामीद जलाञ्जलिम् ।
अन्यथा घ्नन्ति ते सर्वे सुकृतं पूर्वसञ्चितम् ॥
अपुत्रा ये मृताः केचित्पुमांसो योषितोऽपि वा ।
अस्मिन्वंशे पितृभ्यो वै दत्तं वस्त्रजलं मया ॥
नास्तिक्येनापि यो विप्र स्तर्पयेत्पितृदेवताः ।
स तत्प्रतिकरो धर्मान् प्राप्नुयात्परमाद्भुतम् ॥
नास्तिक्याद्व सतो यस्तु तर्पयेन्न पितॄन् द्विजः ।
पिबन्ति देहिनं स्रावं पितरस्तज्जलार्थिनः ॥
पितॄणां पितृतीर्थेन देवानां देवकेन तु ।
इति मत्वातु कुर्वाणा मुच्यन्ते गृहमेधिनः ॥
पञ्च तीर्थानि विप्रस्य करे सन्त्यथ दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यन्तु सौमिकम् ॥
ब्राह्मं पश्चिमलेखायां दैवं स्याङ्गुलमूर्धनि ।
प्राजापत्यं कनिष्ठादौ मध्ये सौम्य विजानतः ॥

अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रतिष्ठितम् ।
कुर्य्यादहरहश्चैवं सम्यक् स्नात्वा विधानतः ॥
स प्राप्नुयाद्गृहस्थोऽपि ब्रह्मणः पद मव्ययम् ।
स्नात्वा हुत्वा च जप्त्वा च दत्त्वाचैव तु योऽश्नुते ॥
अमृतं सोऽश्नुते नित्यं तस्य स्थान मनामयम् ।
अस्नात्वाश्नुमलं भुङ्क्ते अजप्त्वा पूयशोणितम् ॥
अजुहृंश्च कृमीन् कीटान् अददंश्च शकृत्तथा ।
आह्लादकरणं स्नानं दुःखशोकापहन्तथा ॥
दुःस्वप्ननाशनश्चैव कार्य्यं स्नानमतः सदा ।
चित्तप्रसाद बलरूप तपांसि मेधा
मायुष्यशौचसुभगत्वमरोगिताञ्च ।
ओजस्वितामिव मदात्पुरुषस्य वीर्य्यम्
स्नानं यशोविभवसौख्यमलोलुपत्वम् ॥
गीर्वाणवृन्दद्विजसत्तमस्तुतः
प्राप्तो मयाद्युच वशिष्ठपौत्रतः ।
पापप्रनाशं वितनोति यः श्रुतः
प्रचोदितः स्नानविधिः सलेशः ॥
उद्देशतो मया प्रोक्तः स्नानस्य परमो विधिः ।
द्विजन्मनां हितार्थन्तु जपस्यातः परं विधिः ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां षट्कर्मस्नानविधिर्नाम तृतीयोऽध्यायः । ३ ।

---

## चतुर्थोऽध्यायः ।

अपस्यातः प्रवक्ष्यामि विधिं पराशरोदितम् ।
यावद्विधं जप यद्यद्वयथाकार्यं द्विजातिभिः ॥
जप्यानि ब्रह्मसूक्तानि शिवसूक्तानि चैव हि ।
वैष्णवानि च सूक्तानि तथा पौराण्यनेकधा ॥
सारस्वतानि दौर्गाणि च ब्रह्माख्यनन्तानि च ।
पौराणिकानि चान्यानि तथा सिद्धान्तिकानि च ॥
सर्वेषां जपसूक्तानामृचां च यजुषां तथा ।
साम्नां चैकाक्षरादीनां गायत्री परमो जपः ।
तस्याश्चैव तु ॐकारो ब्राह्मणाय उपासितः ।
आभ्यां तु परमं जप्यं त्रैलोक्येऽपि न विद्यते ॥
तयोश्च देवतार्षादि समासान्तोऽभिधीयते ।
येन विज्ञानमात्रेण द्विजो ब्रह्मत्व मश्नुते ॥
आसीन्नच यदा किञ्चित्सदेवासुरमानुषैः ।
तदेवाक्षरमेवासीद्दात्मविन्यस्तविग्रहः ॥
गतभीरद्वितीयोऽपि एकाकी दिवि मोदते ।
चिन्तयामास गायत्रीं प्रत्यक्षा साऽभवत्तदा ॥
गायत्री सा भवत्पत्नी प्रणवोऽभूत्पतिस्तया ।
पुमान्स्त्री च दम्पत्याविति ताभ्यां समभूज्जगत् ॥
प्रणवो हि परं तत्त्वं त्रिदेवं त्रिगुणात्मकम् ।
त्रिदेवत्वं त्रिधामञ्च त्रिमन्त्रं त्रिरवस्थितम् ॥
त्रिमानञ्च त्रिकालञ्च त्रिलिङ्गं कवयो विदुः ।

सर्वमेतत्त्रिरूपेण व्याप्तन्तु प्रणवेन तु ॥
ऋग्यजुः सामवेदश्च त्रिवेद इति कीर्तितः।
सत्वं रज स्तमश्चैव त्रिगुणस्तेन चोच्यते ॥
ब्रह्मा विष्णुस्तथेशान स्त्रिदैवत मितीर्यते।
अग्निः सोमश्च सूर्यश्च त्रिधामेति प्रकीर्तिताः ॥
अन्तःप्रज्ञं बहिः प्रज्ञं घनप्रज्ञ मुदाहृतम्।
हृत्कण्ठे तालुके चेति त्रिस्थान मिति कीर्त्यते ॥
अकारोकारमश्चेति त्रिमात्रा उच्यते सुत!।
भूतम्भव्यं भविष्यञ्च त्रिकाल मिति स स्मृतः ॥
स्त्रीपुंनपुंसकञ्चेति त्रिलिङ्गेति प्रकीर्तितः।
त्रिखभावस्थितो वेदो मन्तव्यो ब्रह्मवादिभिः ॥
पर्यवस्यति यच्चैतद्विश्व मुत्पद्यते यतः।
निर्माणिकः समानोऽपि सादरपि निरादिकः ॥
स जप्यः सर्वदा सद्भिः ध्यातव्यश्च विधानतः।
वेदेषु चैव शास्त्रेषु बहुधा स प्रकीर्तितः ॥
तथा सत्वमि चैकोऽयं षट्कारात्म सदा स्थितः।
कर्मारम्भेषु सर्वेषु त्रिमात्रं सम्प्रकीर्तितः ॥
स्थितो यत्र तथोङ्कारः स्मर्तव्यः स तथैव हि।
ऋग्वेदः स्वरितोदात्त उदात्तस्तु यजुः स्मृतौ ॥
सामवेदः स विज्ञेयो दीर्घः स्मृत एव च।
सनत्कुमारसिद्धान्ते प्रणवो विष्णुरुच्यते ॥
यस्मिंस्तस्य च विश्रान्ति स्तत्परं ब्रह्मसञ्ज्ञितम्।
उच्चारितस्य तस्याथ विश्रान्तश्च यदक्षरम्।

तदक्षरं समाख्यातं यस्मिन्नेव स लीयते ॥
घण्टास्वनिनवच्चास्य विश्रान्तिः शब्दवेधसः ।
कुर्वीत ब्रह्मविद्विप्रो यदीच्छेद्योग मात्मनः ॥
सर्वस्यापि च शब्दस्य व्यक्तस्योच्चारितस्य च ।
स ध्यातेर्यस्तु स ध्यानी शब्दब्रह्मविदुच्यते ॥
यावदस्यो सुनीनास्य प्राच्यवीज्यनकस्य च ।
वर्गाष्टकोऽपि तं ब्रूयात् स्वभवे शब्दवेधसः ॥
तैलधारा मिवाच्छिन्नदीर्घघण्टानिनादवत् ।
अवाग्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥
स्थित्वा सर्वेषु शब्देषु सर्वं व्याप्त मनेन हि ।
न तेन हि विना किञ्चिदक्तुं यान्ति गिरा यतः ॥
उद्गीत मक्षरं ह्येतदुद्गीथश्च उपास्यते ।
उपास्यो मध्यतस्तेष दानं विश्रामयेद्धृदि ॥
प्रणवाद्याः स्मृता वेदाः प्रणवे सर्वशो स्थिताः ।
वाङ्मयं प्रणवं सर्वं तस्मात्प्रणव मभ्यसेत् ॥
ब्रह्मार्षं तस्य विज्ञेयमग्निश्च दैवतं महत् ।
आद्यच्छन्दः स्मरेत्तस्य नियोगोद्दूयाति कर्मणि ॥
उत्पन्नमेतत् यतः समस्तम्
व्याहृत्य तिष्ठेत्प्रलयेऽपि यत्र ।
एकाक्षरेणापि जगन्ति येन
व्याप्तानि कोऽन्यः परमोऽस्ति तस्मात् ॥
ध्येयं न जप्यं न च पूजनीयं
तस्मान्न देवास्त्ररणीय मन्यत् ।

दुस्तार संसारपयोधिमग्न-
तारा य विष्णुप्रणवः स पुज्यः ॥
ॐकारमुद्दिश्यतो ह्येतत् रूप मेकाक्षरस्य च ।
जप्या च सततं देवी गायत्री साधुनोच्यते ॥

इति श्रीवृहत्पाराशरीये षट्कर्माणि स्वरूपवर्णनं नाम
[च]तुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

गायत्र्याः संप्रवक्ष्यामि देवार्षादिक्रमेण तु ।
अक्षराणाञ्च विन्यासं तेषाञ्चैव तु देवताः ॥
जपे यथाविधा कार्य्या यथाविधा च सार्पयेत् ।
होमे यथा च कर्त्तव्या यथाथ वाभिचारके ॥
यत्फलं जपहोमादौ यथावज्जयने च सा ।
ध्यातव्या च यथा देवी यथावत्तन्निबोधत ॥
गायत्री तु परं तत्वं गायत्री परमा गतिः ।
सर्व्वोऽमरैरियं ध्याता सत्यं व्याप्तं तया जगत् ॥
उत्पाद्यते त्रिपादाद्या तस्यां पुनर्निवेशनम् ।
गायत्री प्रकृतिर्ज्ञेया ओँङ्कारः पुरुषः स्मृतः ॥
ताभ्यां उभयसंयोगाज्जगत्सर्वं प्रवर्त्तते ।
पादास्त्रय स्त्रयो वेदा स्तेषु तत्वाक्षराणि च ॥
चतुर्विंशतिरेव स्यात्तैर्व्याप्तमखिलं जगत् ।

आदाय चैकं प्रथमन्तु पादमृग्भ्यो द्वितीयन्तु तथा यजुर्भ्यः
साम तृतीयन्तु ततो भवेत्सा सावित्र्यदेवी स्वयमेव सर्गे ॥
दैवत्यमस्यां सविता सुरार्च्यं च्छन्दोऽपि गायत्रमभूच्च तस्य
विश्वस्य मित्रो द्विजराजपुत्रो मुनिर्विनियोगस्तु जपादिकेषु
अस्यास्तु तत्त्वाक्षरविंशतिस्तु चत्वारि पादत्रितयन्तु तस्याः
भूरादिभिस्त्रिभिः संयुक्तां सोङ्कारमेतद्वदनं परस्याम् ।
केचिद्भुतार्थं वदनं वदन्ति सौविभ्रदेव्याः श्रुतितत्त्वविज्ञाः
इमाश्च वक्तुं सकलामराणामित्येतया व्याप्तमशेषमेतत् ॥
भूम्यादिकेन त्रितयेन पादं पादश्च वेदत्रितयेन चास्याः ।
प्राणादिकेन त्रितयेन पादं पादौ त्रिभिर्व्याप्तमशेषमस्याः

यत्सूर्य्यमस्या द्विज वेत्ति पादं
स वेत्ति विद्वान् परमं पदन्तु ।
व्याप्तिः परस्याः सकलापि चैषा
यो वेत्ति चैनां स तु विप्रसमः स्यात् ॥
गायत्रीं यो विजानाति ज्ञात्वा चैव उपासयेत् ।
नामधारकमात्रोऽसौ न विप्रो ह्यपरोऽपि सः ॥
किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ।
साङ्गैः सावित्रीहीनेन न विप्रत्वमवाप्यते ॥
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥
गायत्री चैव वेदाश्च ब्रह्मणा तोलिताः पुरा ।
वेदेभ्यश्च समस्तेभ्यो गायत्र्यतिगरीयसी ॥
तदक्षरेषु दैवत्यं चतुर्विंशति कथ्यते ।

सन्न्यासं यदि बोधेन कुर्वन् ब्रह्मत्वमाप्नुयात् ॥
जानीयादक्षरं देव्याः प्रथमामाग्नुमुत्तमे।
प्राभञ्जनं द्वितीयन्तु तृतीयं वह्निदैवतम् ॥
विद्युतश्च तुरीयन्तु पञ्चमन्तु यमस्य तु।
षष्ठन्तु वारुणं तत्त्वं सप्तमन्तु वृहस्पतिः ॥
पार्ज्जन्यमष्टमं तत्त्वं नवमं चन्द्रदैवतम्।
गान्धर्वं दशमं विद्यात्त्वष्टुरेकादशं तथा ॥
मैत्रावरुणमन्यद्वै पुष्णस्तथा त्रयोदशम्।
चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणा स्मृतम् ॥
मरुद्देवात्मकं ज्ञेयं पञ्चदशं यदक्षरम्।
सौम्यञ्च षोड़शं तत्त्व माङ्गिरसमथापरम् ॥
विश्वेषाञ्चैव देवाना मष्टादशमथाक्षरम्।
अश्विनौ चोनविंशन्तु विंशं प्राजापतिर्विदुः ॥
एकविंशं कुवेरस्य द्वाविंशं शङ्करस्य च।
त्रयोविंशं तथा ब्राह्मं चतुर्विंशन्तु वैष्णवम् ॥
इति ज्ञात्वा द्विजः सम्यक् स सर्वाक्षरदेवताः।
कुर्वन् जपादिकं कर्म परं श्रेयोऽधिगच्छति ॥
पादाङ्गुष्ठादिमूर्द्धान्त मात्मनो वपुषि न्यसेत्।
अक्षराणि च सर्वाणि पृच्छन् ब्रह्मत्वमात्मनः ॥
पादाङ्गुष्ठयुगे त्वेकं एकङ्गुल्फद्वयोर्द्वयोः।
जानुनोश्च द्वयोरेकमेकन्तु रेकयोर्द्वयोः ॥
मुष्के कव्यां तथैकैकं एकैकं जठरे रसैः।
स्तनद्वये तथैकन्तु न्यसेदेकं गले तथा ॥

वक्त्रे तालुनि हृक् स्तुत्योः स्तुर्व्येकैकमेव च ।
भ्रुवोर्मध्ये तथैकन्तु ललाटे चैकमेव हि ॥
याम्यपश्चिमसौम्येषु एकैक मेकमूर्द्धनि ।
गायत्रीन्यस्तसर्वाङ्गो गायत्री विप्र उच्यते ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसि ।
यः प्रोक्तोऽक्षरविन्यासो व्याहृतीनामथोच्यते ॥
सप्तापि व्याहृतीर्न्यस्त्वा भवेदर्भो जपादिषु ।
भूर्लोकं पादयोर्न्यस्त्वा भुवर्लोकन्तु जानुनोः ॥
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ।
जनलोकन्तु हृदये कण्ठदेशे तपस्तथा ॥
भ्रुवोर्ललाटसन्ध्योश्च सत्यलोकः प्रतिष्ठितः ।
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ॥
तच्छुभं ज्योतिषां ज्योति स्तद्यदात्मविदो विदुः ।
देवस्य सवितुर्भर्गो वरणीयश्च धीमहि ।
तद्धयाकम्भियो यस्तु ब्रह्मत्वे च प्रचोदयात् ॥
छन्दोदैवतपर्षाञ्च विनियोगञ्च ब्राह्मणम् ।
मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म समाचरेत् ॥
स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा ॥
हीनं न विनियुञ्जीत मन्त्रन्तु मात्रयापि च ।
देवतायतने कुर्य्याज्जपं नद्यादिकेषु च ॥
आगमेषु यतीनाञ्च गोष्ठे वा स्वगृहेऽपि वा ।
चतुर्षु मतिपूर्वेषु स्नानमादि क्रमेण तु ॥
दशगुणं सहस्रं स्यात् फलं निष्काममन्तकम् ।

असमीपे जलं कुर्य्यात् समङ्गं तद्भवेद्यथा ॥
असङ्ग्य मासुरं यस्मात्तस्मात्तद्गणयेद् ध्रुवम् ।
स्फाटिकै र्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ॥
अक्षमाला प्रकर्त्तव्या प्रशस्ता त्त्युत्तरोत्तरा ।
अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना ॥
यथा कथञ्चिद्गणयेत्ससङ्ख्यं तद्भवेद्यथा ।
प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम् ॥
अत्योङ्कारसमायुक्तां मन्यन्ते कवयोऽपरे ।
प्रणवान्ते तथाचादौ आङ्करन्ये जपे क्रमम् ॥
आदौ चैवतु चोङ्कार आहन्तादिक्रमोऽन्ततः ।
तदाद्यञ्च तदन्तञ्च कुर्य्यात्प्रणवसम्पुटम् ॥
आद्यन्तरचितं कुर्य्यात् इति पाराशरोऽब्रवीत् ।
अक्षर प्रतिलोपेन सोङ्कारेण क्रमेणतु ।
पुट्कारान्ताञ्च कुर्वीत प्रच्छन्नं विधं बुधः ॥
होमेऽपि च जपं कुर्य्यात् प्रणवावर्जनं द्विजः ।
अभिप्रेतार्थहोमादौ स्वाहान्तन्त मुदीरयेत् ॥
मद्गीर्णतां यदा पश्येद्रागाद्वा द्विषतोऽपि वा ।
तदा जपेच्च गायत्रीं सर्वदोषापनुत्तये ।
रुद्रजाप्यानि कार्य्याणि सूक्तञ्च पुरुषस्य च ।
शिवसङ्कल्पजप्यञ्च सर्वं कुर्य्याद्विधानतः ॥
घ्नन्ति जप्यानि पापानि श्रेयोदद्युस्तदर्थिनः ।
अतो जपं सदा कुर्य्याद्यदिच्छे च्छुभमात्मनः ॥
द्रुपदां वा जपेद्देवी मजपाञ्चस्वकालथा ।

प्रणवस्य सदाभ्यासीद्याति ब्रह्मत्वमिच्छति ॥
प्रणवानामयुताभ्यां तथा षोड़शभिः शतैः।
पुंसाकृच्छ्रत्रयं घोरान् तत्प्रणामजपं विदुः ॥
रविमण्डलमध्यस्थे पुरुषे लोकसाक्षिणि।
समर्पितमयाचेदं सूर्याख्ये ब्रह्मणः पदे॥
न जपं प्रसभं कुर्यात् प्रसमं घ्नन्ति राक्षसाः।
ब्राह्मणा भागधेयस्तु तेषामेवावधीकृताः॥
उपांशुस्तु जपं कुर्यात् कार्य्यं चैव तु मानसम्।
निवृत्तोष्ठमुपांशु स्यादचलोष्ठं तु मानसम्॥
द्विविधन्तु जपं कुर्यादुपांशुं मानसन्तथा।
उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः॥
उपांशुजपयज्ञस्य मानसे च रतस्य च।
इहैव याति वेधस्त्वमिति पाराशरोऽब्रवीत्॥
विधियज्ञाः पाकयज्ञा ये चान्ये बहवो मखाः।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम्॥
जपेनैकेन सिद्धेन किल सिद्धं भवेदिह।
कुर्य्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥
शतेन जन्मजनितं सहस्रेण पुराकृतम्।
अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम्॥
दशभिर्जन्मजनितं शतेन तु पुराकृतम्॥
सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति पातकम्।
अस्मिन् कलियुगे विद्वान्विधिवत्कर्म यत् कृतम्
अष्टद्वयगुणं तद्धि कृताद्यैर्युगतो ध्रुवम्।

न च तच्छ्रूयते कर्तुं मात्राम्नायस्य भूषणात् ॥
अयथार्थकृतात्पाठान्मन्त्रसिद्धिर्गरीयसी।
नच मन्त्रोपहसनं स्वपार्श्व मवलोकयेत् ॥
नान्यसक्तो न तमस्थो न चैवार्द्रशिरास्तथा।
नाद्रीणां पादमाक्रम्य न चैवहि तथाकरौ ॥
नैवम्विधं जपङ्कुर्य्यान्नच सञ्चालयेत्करौ।
प्रच्छन्नानि च दानानि ज्ञानञ्चानिरहङ्कृतम् ॥
जपानि च सुगुप्तानि तेषां फलमनन्तकम्।
य एवमभ्यसेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥
स ब्रह्मलोक माप्नोति तथा ध्यानार्चनादपि।
अथान्यत्सम्प्रवक्ष्यामि विशेषन्तु पितामहे ॥
लब्धवान्वेधसः पृष्ठाद्गायत्रीध्यान मुत्तमम्।
तदक्षरे तु यद्वर्णं यत्र यत्र च यः स्मरेत् ॥
यत्फलं लभते कृत्वा यथा तस्याः समर्चनम्।
तत्प्रकृतिं स च स्वान्तश्चिकारो बुद्धिरेव च ॥
तुरीत्येतदहङ्कारं वशब्दं विद्धिषापहम्।
रे स्पर्शन्तु णिरूपं च यं रसञ्चमातभम् ॥
गोः श्रोतन्देवचक्षुः सकार रसना तथा।
यो नासाच तथा वाग्मी हि हस्तौ च द्विपादहयम् ॥
य उपस्थन्तु दं योन्यो नखं प्राकारमावृतम्।
चो तेजोरसजं यस्मा गायत्र्यास्तत्वचिन्तनम् ॥
चतुर्विंशतितत्वानामत्येकमक्षरेषु यः।
गायत्रीं संस्मरेद्द्योगान् स याति ब्रह्मणः पदम् ॥

लकारं पादयोर्न्यस्य ब्रह्मविष्णुशिवाकृतिम्।
शान्तम्पद्मासनारूढन्ध्यानाद्धरति किल्बिषम्॥
मकारं पादयोर्न्यस्वा अतसीपुष्पसन्निभम्।
पद्ममध्यस्थितं सौम्यन्तद्गो चोपपातकम्॥
विकारं जङ्घयोर्द्वाभिन्ध्यायेदेतद्विचक्षणः।
ब्रह्महत्याकृतं पापं हन्यात्तद्धि स्मृतः क्षणात्॥
ऊकारं जानुदेशे तु इन्द्रनीलसमप्रभम्।
निर्दहेत् सर्वपापानि ग्रहरोग मुपद्रवम्॥
ऊर्वोर्विविमलन्ध्यायेत् शुद्धस्फटिकविद्युतिम्।
विज्ञातं हन्ति तत्पापमगम्यागमनं कृतम्॥
रेकारं वृषणे प्रोक्तं विद्युत्स्फुरिततेजसम्।
मित्रद्रोहकृतं पापं स्मरणादेव नाशयेत्॥
णिगुह्ये श्वेतवर्णन्तु जातिपुष्पसमद्युतिम्।
गुरुहत्याकृतं पापं शोधयेद्ध्यानचिन्तनात्॥
यङ्कुष्यां तारकावर्णाश्चन्द्रवधिष्ण्यभूषितम्।
गोहत्याविहितं पापं णीकारस्य विशोधयेत्॥
श्यामं रक्तञ्च देकारन्ध्यानकृद्दशमाश्रयेत्।
हृदि कुन्देन्दुवर्णाभम्वकार ममृतं स्रवेत्॥
गुरुहत्याकृतं पापं वकारेण प्रणश्यति।
स्यकारं विन्यसेत्कण्ठेत्वोष्ठं स्फटिक सन्निभम्॥
मनसोपार्जितं पापं स्यकारेण प्रणश्यति।
धिकारं वसुदैवत्यं वदनं स्वर्णसन्निभम्॥
प्रतिग्रहकृतं पापन्तत्क्षणादेव नश्यति।

मकारं पद्मरागाभं शिरस्थं दीप्ततेजसम्॥
पूर्वजन्मकृतं पापं मकारेण प्रणश्यति।
ह्रिकारं नासिकाग्रेतु पूर्णचन्द्रसमप्रभम्॥
पूर्वात्परतरं पापं स्मरणादेव नश्यति।
धीकारं त माङ्गिरसन्नेत्रयोर्विन्यसेद्बुधः॥
मनोवाक्कायिकं पापं चिन्तनादेव नश्यति।
योकारं रक्तवर्णाभ मिन्द्रनीलसमप्रभम्॥
प्राणिहत्याकृतं पापं योकारेण विनश्यति।
द्वितीयं तु तथा प्रोक्तं योकारं शङ्खसन्निभम्॥
निर्दहेद्दुष्टपापानि अपेयामेयकानि च।
नकारे सुमुखे पूर्व मादित्योदयसन्निभम्॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेदैन्द्रवं पदम्।
नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखे॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्वैष्णव पदम्।
सौम्यङ्गोरोचनापीतं चोकारम्पश्चिमामुखम्॥
सकृद्ध्यात्वा द्विजश्रेष्ठः सगच्छेद्ब्रह्मणः पदम्।
शङ्खकुन्देन्दुधवलन्दकारञ्चोत्तरामुखम्॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्ब्रह्म शाश्वतम्।
यकारस्तु शिरः प्रोक्तश्चतुर्वदनसंयुतम्॥
याकारं सगुणं प्रोक्तश्चतुर्विंशति संस्मृतम्।
यं यं पश्यति चक्षुर्भ्यां यं यं स्पृशति पाणिना॥
यं यं च भाषते चित्ते तत्सर्वं पूतमेवच।
जाप्येतु विपदा ज्ञेया ब्राह्मणैस्तत्वचिन्तकैः

अम्बुका नाम सा देवी यजुर्वेदप्रतिष्ठिता।
अन्तर्जले निरावर्त्य मुच्यते ब्रह्महत्यया॥
सा देवी द्रुपदा नाम वेदे वाजसनेयके।
सोपनीय समस्तानि महतां स द्विजोत्तमः॥
ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्त्तते।
प्रमादेन कथञ्चिद्वा जपं कुर्वन् भवेष्वपि॥
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः।
तद्विष्णोरिति मन्त्रोऽयं स्मर्त्तव्यः सर्व्वकर्म्मसु॥
आवर्त्य प्रणवं वापि सर्व्वस्यादिर्यतोऽहि सः।
अभ्यसेत्प्रणवं नित्य मेकचित्तसमाहृतः॥
गायत्री च तथा देवी वैदिकन्तु जपं द्वियत्।
पौराणं पाञ्चरात्रन्न सोऽभ्यसेन्मुक्ति माप्नुयात्॥
य।वेद स्नानि वै तानि यान्येतानि च सा श्रुतिः।
जपनयेनेष्टक्रान पुंसा ददाति मार्गं सवितापि क्रतुं।
अयंहि सर्व्वेष्टक्रतान्वरिष्ठोविधेः पदं यास्यति निर्विकल्प॥
यदुक्तं धर्म्मशास्त्रेषु तथा सर्वश्रुतिष्वपि।
उपनिषन्समन्तद्वत् विप्रहितं प्रकीर्त्तितम्॥
न्यासन्तनुत्रस्व बन्धदेहे
जग्राह वोङ्कारमयीसुतीक्ष्णम्।
विप्रश्च वर्ष्मान्निपदाश्च लोके
अतः स बुधः कुनखश्च कुर्यात्॥

इति श्रीबृहत्पाराशरीये जपनिर्णयः॥

देवार्चनं प्रवक्ष्यामि यदुक्तं ऋषिभिः पुरा ॥
वैदिकैरेव तन्मन्त्रैर्यस्य एतस्य तैरिति।
अर्चयेद्वैदिकैर्मन्त्रैर्नानुग्राह्यमुपेक्षते ॥
वैदिकोऽनुग्रहस्तस्य वेदचिह्नकरणेन तु।
ब्रह्माणं वैधसैर्मन्त्रैर्विष्णुं स्वैः शङ्करं स्वकैः ॥
अन्यानपि तथा देवानर्चयेत्स्वीयमन्त्रकैः।
मन्त्रन्यासस्मृता कृत्वा स्वदेहे देवतासु च ॥
गायत्र्योङ्कारन्यस्ताङ्गः पूजयेद्विष्णुमव्ययम्।
न्यस्यातु व्याहृतीः सर्वाः प्रतिस्थानक्रमेण तु ॥
ब्रह्मीभूतः शुचिः शान्तो देवयागमुपक्रमेत्।
विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥
नामग्रहणमात्रेण पापयोगं छिनत्ति यः।
तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ॥
यद्ज्ञात्वा मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः।
षट्स्वेषु हरेस्सम्यगर्चनं मुनिभिः कृतम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
अग्नौ क्रियावतां येषां दिवि देवमनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिम्।
आपो ह्यायतनन्तस्य तस्मात्तासु सदा हरिः ॥
सर्वगत्वेन विष्णोस्तु स्थण्डिले भावितात्मनाम्।
दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ॥
अर्चितं स्याद्दिदन्तेन नित्यम्भुवनसप्तकम्।
अनुष्टुभस्य सूक्तस्य त्रिभन्तस्य च दैवतम् ॥

पुरुषो यो जगद्बीज ऋषिर्नारायणः स्मृतः।
अस्य सूक्तस्य सर्वस्य ऋचा न्यासं यथाक्रमम्॥
देवे आत्मनि च तथा समग्रच्छाव्यतः परम्।
हस्तन्यासपुरा कृत्वा स्मृत्वा विष्णुस्तथाव्ययम्॥
शिखाबन्धञ्च दिग्बन्धं सोऽर्चयेद्दिष्णुमात्मनि।
प्रथमांक्षिप्यसेद्दामे द्वितीयां दक्षिणे करे॥
तृतीया वामपादेनु चतुर्थीं दक्षिणे न्यसेत्।
पञ्चमीं वामजानौ तु षष्ठीं च दक्षिणे न्यसेत्॥
सप्तमीं वामकच्छाञ्च दक्षिणायांस्तथाष्टमीम्।
नवमीं नाभिमध्येतु दशमीं हृदि विन्यसेत्॥
एकादशीं वामपादौ द्वादशीं दक्षिणे न्यसेत्।
कण्ठे त्रयोदशीं न्यस्वा तथा वक्त्रे चतुर्दशीम्॥
अक्ष्णोः पञ्चदशीं न्यस्वा षोडशीं मूर्द्ध्नि विन्यसेत्।
एवं न्यासविधिं कृत्वा पश्चात् यागं समाचरेत्॥
आसने चिन्तयेत्पद्म मष्टदलं सकर्णिकम्।
व्याहृतीना मथ न्यासं कुर्य्यात्तद्विधिवद्विजः॥
भूर्लोकं पादयोर्न्यस्वा भुवर्लोकन्तु जानुनोः।
स्वर्लोकं कटिदेशेतु नाभिदेशे महस्तथा॥
जनोलोकन्तु हृदये कण्ठदेशे कटीस्तथा।
भ्रुवोर्ललाटमध्येस्तु सत्यलोकः प्रतिष्ठितः॥
हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रज्योतिषां ज्योतिस्तत्सदात्मविदो विदुः॥
आवाहन मथ प्राङ्ग विष्णोरमिततेजसः।

यदर्चासतये तस्य स्वदेहे चिन्तयेद् यथा ॥
आद्य मावाहयेद् देवम्च चाच पुरुषोत्तमम्।
यथादेहे तथा देहे न्यासं कृत्वा विधानतः ॥
द्वितीययासनन्दद्याद्दद्यात्पाद्यं तृतीयया।
चतुर्थ्यार्घ्यः प्रदातव्यः पञ्चम्याचमनन्तथा ॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम्।
यज्ञोपवीतं चाष्टम्या नवम्या गन्ध मेव च ॥
पुष्पन्देयं दशम्यातु एकादश्याच धूपकम्।
द्वादश्या दीपकन्दद्यात् त्रयोदश्या निवेदनम् ॥
चतुर्दश्याञ्जलिं कुर्यात्पञ्चदश्या प्रदक्षिणाम्।
षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ॥
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनं हरेः।
षण्मासात्सिद्धिमाप्नोति एवमेवहि योजयेत् ॥
आदित्यमण्डले देवन्ध्यात्वा विष्णुमुपैति यः।
स याति ब्रह्मणः स्थानं नात्र कार्या विचारणा ॥
ध्येयो दिनेश परिमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ॥
केयूरवान्मकरकुण्डलवान् किरीटि-
हारी हरि र्मुनिजनैर्धृतशङ्खचक्रः ॥
सूक्तेन विष्णुविधिना समुदीरितेन
योगेन नित्यमजमादिमनन्तमूर्त्तिम्।
भक्त्यार्चयेत्पठति यश्च स विष्णुदेहम्
विप्रो विशेद्धरिवरेण कृतार्थदेहः ॥

पञ्चरात्रविधानेन स्थण्डिले वापि पूजयेत् ।
जलमध्यगतो वापि पूजयेज्जलमध्यतः ॥
द्वादशाराचैनव्यूहपञ्चतत्वक्रमेण तु ।
अभावे धौतपत्रस्य पवित्रायास्तथा द्विजः ॥
जलेऽपि हि जलेनैव मन्त्रैरेवार्चयेद्धरिम् ।
विष्णुर्विष्णुत्यजस्रन्तु चिन्तयेद्धरिमेव तु ॥
तिष्ठन्व्रजंस्तथासीनः शयानोऽपि हरिं सदा ।
संस्मरन्वाशुभं पश्येदिहामुत्र च वै द्विजः ॥
रुद्रं रुद्रविधानेन ब्रह्माणञ्च विधानतः ।
सूर्यं संहितमन्त्रैश्च तदीरितविधानतः ॥
दुर्गां कात्यायनीं चैव तथा वाग्देवतामपि ।
स्कन्दं विनायकञ्चैव योगिनीं क्षेत्रपालकान् ॥
विधानेनार्चयेत्सर्वान्यो विप्रो भक्तितत्परः ।
विष्णुना सुप्रसन्नेन विष्णुलोकमवाप्नुयात् ॥
ग्रहांश्च पूजयेद्विद्वान् ब्राह्मणः शान्तितत्परः ।
आरोग्यपुष्टिसंयुक्तो दीर्घमायुष्यमाप्नुयात् ॥
ग्रहा गावो नृपा विप्राः सद्भिः पूज्याः सदा द्विजैः ।
पूजिताः पूजयन्त्येते दहन्ति चापमानिताः ॥
यो हितः सर्वसत्वेषु गोनृपब्राह्मणेषु च ।
इहामुत्र स पूज्योऽसौ विष्णुलोकमवाप्नुयात् ॥
उक्तो गृहस्थस्य सुरार्चनस्य
धर्म्यो विधिर्विष्णुजनस्य लब्धौ ।
कार्यो द्विजातिः प्रतिवासरं यो

वेदोक्तमन्त्रैः समये हिताय ॥
देवपूजाविधिः प्रोक्त एष उद्देशतो मया।
वैश्वदेवस्य वक्तव्यो विधिर्विप्र ! मयाधुना ॥
इति बृहत्पाराशरीये धर्मशास्त्रे देवपूजाविधिः समाप्तः ॥



वैश्वदेवं प्रवक्ष्यामि यथाकार्यं द्विजातिभिः।
स्वगृह्योक्तविधानेन जुहुयाद्वैश्वदेवकम् ॥
हविष्यस्य द्विजोभावे यथालाभकृतं हविः।
जुहुयाद्विधिवद्भक्त्या यथा स्यात्त्विर्त्तिनिर्वृतिः ॥
यद्वा तद्वापि होतव्य मग्नौ किञ्चिद्द्विजातिभिः।
फलन्वा यदिवा मूलं शाकन्वा यदिवा पयः॥
अहुत्वा च द्विजोऽश्नीयाद्यत्किञ्चित् स्वयमश्नुते।
अश्नीयाच्चेदहुत्वापि नरकं स समाविशेत् ॥
जुहुयादन्नमन्नारवर्ज्जमन्नं हुताशने।
अनुज्ञातो द्विजैस्तैस्तु तैः कृत्वा पुरुषर्षभः ॥
यदाग्नौ हूयते नैव यस्य ग्रासो न दीयते।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणञ्चरेत् ॥
लौकिके वैदिके चैव वैश्वदेवो हि नित्यशः।
लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ॥
अभावादग्निहोत्रस्य श्रावसस्य वा तथा।
अस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते ॥

अग्नि: सोम: समस्तौ तौ विश्वदेवास्तथैव च।
धन्वन्तरी: कुहूस्तद्दनुमात: प्रजापति: ॥
द्यावाभूम्यो: स्विष्टिकृच्च कृत्वा तेभ्य: पुन: पुन: ॥
कुर्याद्बलिकृतं पश्चात्सर्वदिक्षु प्रदक्षिणाम्।
सूत्रान्तैस्तस्य पुंभ्यश्च यमाय च सहानुगै: ॥
मरुद्भ्यश्च त्रिपिष्टारि अप्सराभ्यस्तथा हरे:।
बनस्पतिभ्य: सर्वेभ्यो मुसलोलूखले हरेत् ॥
श्रियै च भद्रकाल्यै च उष्णीषपादयो: क्रमात्।
ब्रह्मणे सानुगायेति मध्ये चैव हरेद्बलिम् ॥
वास्तवे सानुगायेति वाममध्ये बलिं हरेत्।
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाशमुत्क्षिपेत् ॥
द्युचरेभ्यश्च भूतेभ्यो नक्तञ्चारिभ्य एव च।
वास्तुपृष्ठे च कुर्वीत बलिं सर्वान्न भूतयेत् ॥
पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्।
पतितेभ्य: श्वपाकेभ्य: पापानां पापरोगिणाम् ॥
कृमिकीटपतङ्गानां सर्वेभ्योऽपि बलिं हरेत्।
एवं सर्वाणि भूतानि यो विप्रो नित्यमर्चयेत् ॥
तत्स्थानं परमाप्नोति यज्ज्योति: परवेधस:।
गृह्योऽग्नौ वैश्वदेवन्तु प्रोक्तमेतन्मनीषिभि: ॥
अनग्निकस्तु कुर्वीत वैश्वदेवं कथं त्विति।
महाव्याहृतिभिस्तिस्र: समस्ताभिस्तथा परा ॥
हुत्वाहुतीश्चतस्रस्तु तथा वेदकृतोऽपि च।
त्रियम्बकं यजामह इत्यादीनाहुतिद्वयम् ॥

वैश्वदेवेच जुहुयाद्विशेषोऽन्यत्र वै पुनः।
अल्पमृत्युनिवृत्त्यर्थमायुःपुष्टिविवृद्धये॥
जुहुयात् त्र्यम्बकं देवं विल्वपत्रैस्तिलैस्तथा।
विनायकाय होतव्या तया घृतस्य चाहुतिः॥
सर्वविघ्नोपशान्त्यर्थं पूजयेत्सन्ततमुतम्।
गणानान्त्वितिमन्त्रेण स्वाहाकारान्तपादतः॥
चतस्रो जुहुयात्तस्मै गणेशाय तथाहुतीः।
तद्विष्णोरिति जुहुयाद्विधिसम्पूर्णताकृतेः॥
प्रणवेन च गायत्र्या केचिज्जुह्वति सद्द्विजाः।
एतौ वै सर्वदेवत्यौ एतत्परन्न किञ्चन॥
एताभ्यां जुहुतं नैव सर्वेभ्योऽपि हुतम्भवेत्।
जुहुयात्सर्पिषाक्तं सव्येन पयसाथ वा॥
क्षीरेन च विकारेण तिलतैलेन वा पुनः।
संप्रोक्ष्य पयसा वापि अक्षान्तं मम्बुयादपि॥
अलाभेचापि गोधूमाः शालयो हवनीयकाः।
हविस्तु हविरभ्युक्तमहविस्तु हर्विर्यतः॥
अभ्यक्तमेव होतव्य मतोरूक्षं विवर्जयेत्।
दरिद्राश्चितिताऽमेके रूक्षान्नहवने विदुः॥
जठराग्नेः स्वयस्त्वेके रूक्षासनमिहोच्यते।
ओँङ्कारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा॥
जुहुयादग्निको विप्रो गृहमेधीह नित्यशः।
बलिशेषञ्च भूतेभ्यः सर्वेभ्योऽप्यविशेषतः॥
हुत्वाथ कृष्णवर्त्मानं कृताञ्जलि प्रसादयेत्।
त्वमग्ने! द्युतिरेतेन मन्त्रेण भक्तिमान् द्विजः॥

आब्रह्ममिति मन्त्रन्तु जपेद्वै सर्वकामिकम् ।
अग्नाव्यग्न इति ह्येतं मन्त्रञ्च प्रयतो जपेत् ॥
अन्यत्रौतशनं मन्त्रं जपित्वा च समापयेत् ।
सर्वशान्तिककृत्यर्थं तथाग्निर्देवतेति च ॥
ज्ञानं धनमरोगित्वं गतिमिच्छंस्तथा द्विजः ।
शम्भुमग्निं रविं विष्णुमर्चयेद्भक्तितः क्रमात् ॥
अजानन् यो द्विजोनित्य मङ्क्त्वा निसृतं हविः ।
पितृदेवमनुष्याणां स्यात्युक्तः प्रयात्यधः ॥
शाकस्यापि तृणं वापि हुत्वाग्नावश्नुते द्विजः ।
सर्वकामसमायुक्तः सोऽत्रैव सुखमश्नुते ॥
स्वरेण वर्णेन च यद्विहीनं तथैव हीनं क्रपयापि यच्च ।
तथातिरिक्तं मम तत् क्षमस्व तदस्तु चाग्नेः परिपूर्णमेतत् ॥
सर्वपापप्रणोदाय सर्वकामाय वै द्विजः ।
द्विजन्मनां हितार्थाय वैश्वदेव उदाहृतः ॥
इति श्रीवृहत्पाराशरे वैश्वदेवविधिः ॥

---

आतिथ्यं संप्रवक्ष्यामि चातुर्वर्ण्यफलप्रदम् ।
चतुर्वर्णातिथिः प्रोक्तः कालप्राप्तो बहुमतः ॥
अदृष्टोऽदृष्टगोत्रादिरज्ञाताचारविग्रहः ।
सन्ध्यामात्रकृताचारसज्जः सोऽतिथिरुच्यते ॥
क्षुत्तृष्णाध्वश्रमश्रान्तः प्राणत्राणान्नयाचकः ।
गृहिणो वैश्वदेवान्ते गृहद्वारमुपागतः ॥
विष्णुरूपोऽतिथिः सोऽयं मत्तारार्थमिहागतः ।
इति मत्वा च भक्त्या च कुर्याद्भोजनायतम् ॥

त्वं शृणु तेन समायातः सर्वदेवमयो विधिः।
निर्दह्य सर्वपापानि समाचायुः प्रयास्यति॥
ब्राह्मणैः सह भोक्तव्यो भक्त्या प्रक्षाल्य पादयम्।
आसमार्घादिकं दत्त्वा दत्त्वा स्रक्चन्दनादिकम्॥
योगिनो विविधैर्वेषैर्भ्रमन्ति धरणीतले।
नराणामुपकाराय ते चाज्ञातस्वरूपिणः॥
तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं द्विजः।
श्राद्धक्रियाफलं हन्ति तत्र यापूजितोऽतिथिः॥
तस्मादपूर्वमेवात्र पूजयेदागतोऽतिथिः।
कदाचित्कश्चिदागच्छेत्तारयेद्यस्तु पूर्वजान्॥
यतिर्वा ह्यग्निहोत्री च तथापि सखरुद्विजः।
सर्वैतेऽतिथयः प्रोक्ता अपूर्वश्च दिने दिने॥
अतिथेऽमरदेहस्त्वं मन्तारार्थमिहागतः।
संसारपङ्कलग्नं मा मुद्धरस्वाघनाशने॥
नैक ग्रामे वसन्नपि मुनीशैरुच्यतेऽतिथिः।
अन्यत्र दृष्टपूर्वोऽपि नासावतिथिरुच्यते॥
क्षत्रियो यदि वा गच्छेदतिथिस्तस्य वेश्मनि।
भक्तेषु सत्सु विप्रेषु कामतस्तु तमाशयेत्॥
वैश्यो वा यदिवा शूद्रो विप्रगृहं समाव्रजेत्।
तौ भृत्यैः सह भोक्तव्यौ इति पाराशरोऽब्रवीत्॥
क्लीबो वा यदि वा काणः कुष्ठी वा व्याधितोऽपि वा।
आगतो वैश्वदेवान्ते प्रष्टव्यः सर्वदेवताः॥
दक्षिणेनापि वैश्येन तथा च वृषलेन च।
आतिथ्यं सर्ववर्णानां कर्तव्यं स्यादसंशयम्॥

योऽतिथीन् पूजयेद्भक्त्या तथाभ्यागमनेन च ।
बालवृद्धादिकश्चैव तस्य विष्णुः प्रसीदति ॥
देवा मनुष्याः पितरश्च सर्वे स्युर्येन तृप्तेन च मूर्ति तिष्ठन्
तस्मात्सदा स्वमराङ्गनाभिस्तस्यातिथिः केन समन्वमस्ति।
इति श्रीबृहत्पराशरे अतिथिविधिः समाप्तः ॥

---

वर्णधर्मान् प्रवक्ष्यामि यत्कृतं ब्राह्मणादिभिः ।
निबोधत्वं द्विजास्तद्वै सक्षेपेण पृथक् पृथक्॥
यजने याजने विप्रे तथा दान प्रतिग्रहे ।
अध्यापन मध्ययनं कर्माण्येतानि षट् तथा ॥
प्रजानां रक्षणं दान मरीणां निग्रहस्तथा ।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम् ॥
यजनाध्ययने दानं पाशुपाल्यस्तथा कृषी ।
वाणिज्यञ्च कुसीदञ्च कर्मषट्कं प्रकीर्त्तितम् ॥
शुश्रूषा ब्राह्मणादीनां वैश्य आजीवनन्तथा ।
एष धर्मः स्मृतः शूद्रो वाणिज्येन च जीवनम् ॥
सर्वेषां जीवनं प्रोक्तं धर्मेणैव च कर्षणम्।
भिन्नवृत्तिर्यथा न स्यात् कुर्य्याद्विप्रस्तथा च तत् ॥
कुर्वन्नेतानि कर्माणि हत्या वा क्षत्रियस्य च ।
हत्त्यभावे द्विजो जीवेद्विप्रवृत्तिं विवर्जयेत् ॥
क्षत्रिये प्रजापालत्वं शस्त्रभृत्त्वं प्रचण्डता ।
निर्जयेत्परसैन्यानि एष धर्मः स्मृतो नृप ! ॥
पुष्पपुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारामे प्रजासु स्यात्तथा नृपः ॥

लौहकर्मरथानाञ्च गवाञ्च प्रतिपालनम् ।
गोरक्षा कृषिवाणिज्यं वैश्यवृत्तिरुदाहृता ॥
शूद्रस्य द्विजशुश्रूषा परोधर्मः प्रकीर्तितः ।
अन्यथा कुरुते यस्तु तद्भवेत्तस्य निष्फलम् ॥
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ।
न दुष्येच्छूद्रजातीनां कुर्य्यात् सर्वस्व विक्रियाम् ॥
विक्रयं मद्यमांसानामभक्ष्यस्य च भक्षणम् ।
अगम्यागामिता चौर्य्यं शूद्रे स्युः पापहेतवः ॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम् ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

अतःपरं गृहस्थस्य कर्माचारं कलौ युगे ।
धर्मसाधारणं शाक्यं चातुर्वर्ण्यक्रमागतम् ॥
युष्माकं सम्प्रवक्ष्यामि पाराशरप्रचोदितम् ।
षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत् ॥
क्षीणाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम् ।
क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत् ॥
स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्ड विवर्जितम् ।
षष्टं सबलप्राणमनड्वाहं न वाहयेत् ॥
वाहयेद्दिवसस्यार्धं पश्चात् स्नानं समाचरेत् ।

कुगवैर्न कृषिं कुर्य्यात्सर्वथा धेनुसंग्रहः॥
बन्धनं पालनं रक्षा द्विजः कुर्य्याद्दृष्टशो गवाम्।
वत्साश्च यत्नतो रक्ष्या वर्धन्ते तै यथाक्रमम्॥
न दूरे तासु मोक्तव्या चरणाय कदाचन।
दूरे गावश्चरन्त्यो वै न भवन्ति शुभायनाः॥
प्रातरेवहि दोग्धव्या दुह्याः सायं तथा गृही।
दोग्धुर्विपर्य्ययेणैव वर्द्धन्ते ताः कदाचन॥
धनादेयत्तृणास्त्यक्ता स्रवन्त्यनुदिनं पयः।
तुष्टिकृद्देवतादीनां पूज्या गावः कथन्न ताः॥
यस्याः शिरसि ब्रह्मास्ते स्कन्ददेशे शिवः स्मृतः।
पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिता
सर्वे देवमया गौस्तु तुष्येत्तद्भक्तितो हरिः॥
हरति स्पर्शनात्पापं पयसा पोषयन्ति याः।
प्रापयन्ति दिवं दत्ताः पुज्या गावः कथन्न ताः॥
यच्छफाहतभूमेस्तु उद्गताः पांशुसंस्पृशः।
प्रीणयेत् पुरुषस्यैनो वन्द्या गावः कथन्न ताः॥
शकृन्मूत्रं हि यस्यास्तु पितुः पुनाति पातकम्।
किमपूज्यं हि तस्या गौरिति पाराशरोऽब्रवीत्॥
गौरवत्सा न दोग्धव्या नचैवं गर्भसन्धिनी।
प्रसूता च दशाहार्वाग्दोग्धा चैन्नरकं व्रजेत्॥
दुर्बला व्याधिसंयुक्ता पुष्पिता वा द्विवत्सभूः।
सा साधुभिर्न दोग्धव्या वर्णिभिः सुखमीप्सुभिः॥

कुलान्ते पुष्पिता गावः कुलान्ते बहवस्सिलाः।
कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः॥
एकत्र पृथिवी सर्व्वा सशैलवनकानना।
तथा गौ र्ज्यायसी साक्षादेकत्रोभयतोऽमुखी॥
यथोक्तविधिनायैता वर्षैः पाल्यास्तु पूजिताः।
पाऽइयेत्पूजयन्नेताः सम्मेमेह च मोदते॥
दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
बन्धनीयास्तथैतास्तु न च प्राक्पश्चिमामुखा॥
गोदृषा वाजिशालायां सुतीक्ष्णं लोहदात्रकम्।
स्थाप्य तु सर्व्वदा तस्यां गवि लुप्तविमोक्षणात्॥
गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्व्वदा।
ताड़यन्ति च ये पापा येचाकर्षन्ति ता नराः॥
नरके पच्यन्तेऽङ्गानि श्वासेनच प्रपीड़िताः।
स पशुचर्म्म दण्डेन मृदु तासां निवर्त्तयेत्॥
गच्छ गच्छेति तां ब्रूयात्मा माभैरिति वारयेत्।
संस्पृशन् गां नमस्कृत्य कुर्य्यात्तान्तु प्रदक्षिणम्॥
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्॥
सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः।
पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च॥
गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोड़शीम्।
कुतस्तेषां हि पापानि येषां गृह मलङ्कृतम्॥
सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम्।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्॥

तिष्ठन्त्येकत्र मन्त्राणि हविरेकत्र तिष्ठति ।
गोभिर्यज्ञाः प्रवर्त्तन्ते गोभिर्देवाः प्रतिष्ठिताः ॥
गोभिर्वेदाः समुत्कीर्णाः स षडङ्गपदः क्रमात् ।
सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः ॥
वसन्ति हृदये नित्यन्तासां मध्ये वसन्ति ये ।
ते पुण्यपुरुषाः क्षोण्यां नाकेऽपि दुर्लभाश्च ये ॥
शृङ्गमूले स्थितो ब्रह्मा शृङ्गमूले तु केशवः ।
शृङ्गाग्रे शङ्करं विद्यात्त्रयोदेवाः प्रतिष्ठिताः ॥
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च ।
सर्वे देवाः स्थिता देहे सर्वदेवमया हि गौः ॥
ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः ।
कम्बलाश्च तरौ नागौ तत्कर्णे यौ व्यवस्थितौ ॥
स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ ।
दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः ॥
सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः ।
ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम् ॥
कालिन्दी गोमये तस्या अपरा देवता स्तथा ।
अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः ॥
उदरे गार्हपत्योऽग्नि र्हृदये दक्षिण स्तथा ।
मुखे चाहवनीयस्तु चावसथ्यौ च कुक्षिषु ॥
एवं यो वर्त्तते गोषु ताड़नं क्रोधवर्जितः ।
महतीं श्रिय माप्नोति स्वर्गलोके महीयते ॥
कृत्यं तस्या न लङ्घेत पूतिगन्धं न वर्जयेत् ।
यावत्पिबति तद्गन्धं तावत्पुण्यं प्रवर्धते ॥

यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम्।
शिवस्यायतनं दत्त्वा दक्षलेन तु विक्षकम्॥
उक्ता गौ वेंधसा सृष्टा तस्य त्वुत्पादनाय च।
तैरुत्पादितशस्येन सर्वमेतद्धि धार्य्यते॥
यश्चैतान् पालयेत् यत्नाच्चर्वयेच्चैव यत्नतः।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च॥
यावद्गोपालने पुण्य मुक्तं पूर्वमनीषिभिः।
उक्षणोऽपि पालने तेषां फलं दशगुणं भवेत्॥
जगदेतद्धृतं सर्वम नडुच्च चराचरम्।
वृष एतावती रक्षा पालनीयस्तु सर्वदा॥
धर्मोऽयं भूतले साक्षाद्ब्रह्मणा विनतारितः।
त्रैलोक्यं धारणायालमन्नानाञ्च प्रसूयते॥
अनादेयानि घासानि विध्वंसन्ति सकामतः।
भ्रमिता भूतलं दूरमुक्षाणक्षो न पूजयेत्॥
उत्पादयन्ति शस्यानि मर्दयन्ति वहन्ति च।
आनयन्ति दवीयस्य मुक्षणोर्वा कोऽधिको भुवि॥
स्कन्धेन दूराच्च वहन्तिभारं माघादि किञ्चिद्यनपत्यरत।
स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्धयन्ति॥
पुण्यास्तु गावो वसुधातले मां विभ्रत्यमुक्षोष्टगर्भभारम्।
भारः पृथिव्या दशताड़िताया एकस्य चाणो त्यपि राधुवाचः॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः।
माहेत्यपीयं धरणीं समाना तस्माद्वृषात् पूजितमस्ति चान्यः॥
उत्पाद्य शस्यानि तृणञ्चरन्ति तदेव भूयः सकलं वहन्ति।
न भारखिन्नाः प्रवदन्ति किञ्चिदशोवृषाद्धार्यति जीवलोकः॥

तृतीयेऽह्नि चतुर्थे वा यदेवोक्ता हलोभवेत् ।
तदा न सातु भेतव्या नैव प्रागदुर्बलस्य च ॥
नाम,वेत्रमकीलन्तु खादिरं वाथ सैंशिपम् ।
द्वादशाङ्गुल कङ्गार्थ्यं तत्र्चैस्कीर्षा समेष वा ॥
शाला द्विजेन्द्रा वृषगोहयानां ता याम्यदिग्द्वारवतीं विदध्यात्।
सौम्या ककुप्द्वारवतीं सुशोभास्तेषां शमिच्छन् धृतमालनश्च॥
गावो वृषो वा हयहस्तिनो वा अन्येऽपि सर्वे पशवो द्विजेन्द्राः ।
याम्या मुखा दिङ्मुखमुत्तरा दिङ्मुखाशका स्ते खल बन्धनीयाः॥
शालाप्रवेशे वृषगोपशूनां राजापि यस्माद्वयकुञ्जराणाम्।
होमञ्च सप्तार्चिषि शास्त्रदृष्टं कुर्य्याद्विजश्चो द्विजपूजनञ्च॥
लाङ्गलं यत्प्रवक्ष्यामि यत्काष्ठं यत्प्रमाणतः ।
हलीशायास्तथामानं प्रतोदस्य युगस्य च ॥
चत्वारिंशत्तथाचाष्टा वङ्गुलानि कुहः स्मृतः ।
अयाद्दीमङ्गुलैर्भोज्यो हलीशा वेधतश्च यः ॥
षोड़शैव तु तस्याधः षड्विंशति तथोपरि ।
वेधस्तथाच कर्त्तव्यः प्रमाणेन षड़ङ्गुलः ॥
अष्टाङ्गुलमुरस्तस्य वेधादूर्द्धं प्रकल्पयेत् ।
ग्रीवा दशाङ्गुला चोर्द्धं हस्तग्राही ततः स्मृतः ॥
अङ्गुलैश्चाष्टभिस्तत् स्याद्वेधः स्यात्प्रतिहारकः ।
तस्याधस्ताच्चत्वारि स वेधश्चतुरङ्गुलः ॥
सार्वतश्चैः शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत् ।
पश्चाङ्गुलमुरस्तस्याः शिरश्चेति विभाजनम् ॥
पृथुत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम् ।
अङ्गुलानि तथा चाष्टौ उरसः पृथुता स्मृता ।

बन्धावधिः प्रतीहारी षड्विंशदङ्गुला भवेत् ।
सुतीक्ष्णो लोहपाल्यस्य मुक्तादामादिदारकत् ॥
नगरं क्षीरवृक्षस्य न विल्वपिचुमर्दयोः ।
इत्यादीनां हि कुर्व्वाणं न नन्दति चिरं गृही ॥
प्राञ्जला सप्तहस्ता तु हलीषा विदुषा मता ।
तस्य वेधः सवर्णायाः कार्य्यो नववितस्तिभिः ॥
ब्रह्माण्यायोर्न तत्कुर्य्यात् कीर्त्तिघ्नौ तौ प्रकीर्त्तितौ ।
प्रमादतस्तु ताः कुर्वन् सशस्यो नश्यति गृही ॥
नीचोच्चरूपमानेन तज्ज्ञास्तां प्रवदन्ति हि ।
चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत् ॥
शेषस्तृष्णाः कदम्बस्य शालाधन्वतमस्य च ।
सम्या वेधाद्बहिः कार्य्या दशाङ्गुलप्रमाणिका ॥
तन्माने च प्रबालीच तदन्तरदशाङ्गुलम् ।
प्रतोदविषमग्रन्थि वैणवश्च चतुः करः ॥
तदग्रे तु प्रकर्त्तव्या यवाकारातु लोहवत् ॥
हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः ।
कुर्य्यादनडुहा दैन्याददैन्यां नरकं व्रजेत् ॥
यथा भीष्टं तथा शोभं वाहकस्य प्रमाणतः ।
भूमेश्च कर्षणायालं तज्ज्ञाः सर्ववदन्ति हि ॥
योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा ।
श्रेष्ठमसत्र संयुक्ते पुण्येऽह्नि तद्विधीयते ॥
यत्र दिने तु बुध्येत तत्र कार्य्यं विजानता ॥
यत्र कृत्यं हितं चापि पुण्यं वा मनसि स्मरेत् ।
तत्र विद्वान् द्विजश्रेष्ठः पुण्येऽह्नि तद्विधीयते ॥

मातृश्राद्धं द्विजः कृत्वा यथोक्तविधिना गृही।
द्रव्यकालानुसारेण कुर्वतो धर्मतः कृषिम्॥
प्रोल्लिखन् मण्डलं पुष्पधूपदीपैः समर्चयेत्।
इन्द्राय च तथाश्विभ्यां मरुद्भ्यश्च तथा द्विजः॥
कुर्य्याद्बलिं स्तुतिं विद्वान् उदलस्यस्वयाय च।
तथा कुमार्य्यै शीतायै अनुमत्यै तथा बलिम्॥
नमः स्वाहेति मन्त्रेण सर्वालङ्कारमनः शुभम्॥
दधिगन्धाक्षतापुष्पैः शमीपत्रैस्तिलैस्तथा।
दद्याद्बलिं वृषाणाञ्च तथाज्यशासनं तथा॥
संहृष्य शिरफालाग्रे हेम्ना वा राजतेन वा।
प्रलेप्य मधुसर्पिभ्यां कुर्य्याच्चैव प्रदक्षिणम्॥
अग्न्योष्णौ मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम्
पुष्पं लाङ्गलकल्याण कल्याणाय नमोऽस्त्विति॥
सीतायाः स्थापनं कुर्य्यात् पाराशरऋषिं स्मरेत्।
सीतां युञ्जत इत्याद्यैर्मन्त्रैःशीरं प्रवाहयेत्।
दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः॥
सीतां पूज्य वशो भर्त्तारञ्च वस्त्रविशारदौ।
सप्त धान्यानि चादाय प्राज्ञ पूर्वामुखो हली॥
तानि दर्त्तोक्षणः क्षेत्रे किरन् भूमौ कृषिद्विजः।
न यवैर्न तिलैर्हीन द्विजः कुर्य्याच्च कर्षणम्॥
तद्विहीनन्तु कुर्वाण न प्रशंसन्ति देवताः।
तिलमात्रच्युतं तोय दक्षिणस्याम्पतेद्दिशि॥
तेन तृप्यन्ति पितरो यावन्न तिलविक्रयः।
विक्रीणीते तिलान् यस्तु तर्पयेत्सोऽपि देवताः॥

विमुच्य पितरस्तत्तु प्रयान्तीव तिलैः सह।
क्षुधाजलं यत्स्नपनेभ्यो भूतले पतेत्॥
पयोदधिघृताद्यैस्तु तर्पयेत्सर्वदेवताः।
देवपर्ज्जन्यभूसीरयोगात् कृषिः प्रजायते॥
व्यापारात् पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत्।
शालीन् भूशणकार्पासं वार्त्ताकुप्रभृतीनि च॥
वापयेत्सर्वबीजानि सर्वत्रापी न सीदति।
चन्द्रक्षये यतिर्विप्रो यो युनक्ति वृषान् क्वचित्॥
तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम्।
चन्द्रक्षये द्विजो विद्वान्यो भुङ्क्ते तु पराशनम्॥
भोक्तुर्मासार्जितं पुण्यं भवेदशन मस्य तत्।
चन्द्रार्कयोस्तु संयोगे कुर्याद्यः स्त्रीनिषेवणम्॥
स रेतोभोजिनस्तस्य परमासं पितरो स्थिताः।
चन्द्रक्षये च यः कुर्य्यान्नरस्तरुनिकृन्तनम्॥
तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः।
वनस्पतिगते सोमे योऽध्वान व्रजेन्नरः॥
प्रभ्रष्टद्विजकर्माणं न त्यजन्त्यमरादयः।
वासांसि दुःप्रणाशाय रजकस्य मतिः क्षिपेत्॥
पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तत्।
सोमक्षये द्विजो याति तत्कायस्तु ऋतागमम्॥
तदेव पितृशापाग्निदग्धो नरक माविशेत्।
अष्टमीं कामभोगेन षष्ठी तैलोपभोगिना॥
कुहूत्य दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम्।

चन्द्रामतीताः पुरुषास्तु दैवा दद्यादपत्या यदि दन्तकाष्ठम्
नराधिराजः सहितस्तु तेन घातः कृतः स्यात्पितृदेवतानाम्
तत्राभ्यज्य विषाणानि गावश्चैव वृषास्तथा ।
चरणाय विसृज्यन्ते आगतान्निशि भोजयेत् ॥
य उत्पाद्येह शस्यानि सर्वाणि तृणचारिणः ।
जगत्सर्वं धृतं यैस्तु पूज्यन्ते किन्न ते वृषाः ॥
येनैकेन प्रदत्तेन दत्तं गोदशकम्भवेत् ।
यद्रूपेण स्थितो धर्मः पूज्यन्ते किन्न ते वृषाः ॥
पाल्याहि यत्नतस्ते वै वाहनीया यथाविधि ।
स याति नरकं घोरं यो वाहयत्यपालयत् ॥
नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः ।
वाहनीयो हि शुद्रेण वाहयन् शुभमाप्नुयात् ॥
वर्जयेद्दुष्टदोषांश्च गावो वै दोहने नरः ।
पाल्या वै यत्नतः सर्वे पालयन् शुभमाप्नुयात् ॥
अन्नार्थं मेतानुक्षाणः ससर्ज परमेश्वरः ।
अन्नेनाप्यायते सर्वं त्रैलोक्यं सचराचरम् ॥
अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः ।
गृह्णाति चाम्भसां सूर्यो रसानन्नाय रश्मिभिः ॥
अन्नं प्राणो बलं चान्न मन्नाज्जीवित मुच्यते ।
अन्नं सर्वस्य चाधारः सर्व मन्ने प्रतिष्ठितम् ॥
सुरादीनां हि रूपेण मन्नं वीजं परं स्थितम् ।
तस्मादन्नात्परं तत्त्वं न भूतं न भविष्यति ॥
द्यौः पुमान्धरणी नारी अम्भोवीजन्दिवश्च्युतम् ।
वसुधात्री तोयसंयोगादन्नादीनां हि सम्भवः ॥

आपोमूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम्।
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः॥
सर्वस्य बीजमापो वै सर्वमद्भिः समावृतम्।
अद्य आप्यायना ह्यापः आपो ज्येष्ठतरा स्मृताः॥
किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः।
न जीवन्ति विना तानि तस्मादापोऽमृतं स्मृतम्॥
दत्तानि चाद्भिरेतस्यां किं न दत्तं क्षितौ भवेत्।
तथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह॥
अतोऽप्यन्नार्थभावेन कर्त्तव्यं कर्षणं द्विजः।
यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्॥
गौरि! सौम्ये! कुमारि! त्वं देवि! देवार्चिते! श्रिये।
सत्कृताहि यथासिद्धा तथा मे सिद्धिदा भव॥
सकृत् सूनोर्विना नाम्ना सीतयाः स्थापनं विना।
विनाभ्युक्षणरक्षार्थं सर्वं हरति राक्षसः॥
वापने नवने क्षेत्रे खले गन्त्रीप्रवाहणे।
एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने॥
देवतायतनोद्यानानिपातस्थानगो व्रजन्।
सीमा श्मशानभूमिञ्च वृक्षच्छाया क्षितिं तथा॥
भूमिं निखातयूपाञ्च अयनस्थानमेव च।
अन्यामपि हि चावाप्यां न कृषन् कृषिकृत् हराम्॥
नोषरां वाहयेद्भूमिं वर्चाश्मककरीषताम्।
वाहयन्नाप्रमत्तश्च न नदीपुलिनं तथा॥
यद्यसौ वाहयेल्लोभात्द्वेषाद्वापि हि मानवः।
क्षीयतेऽसौ चिरात्पापात् सपुत्रपशुबान्धवः॥

नरकं घोरतामिस्रं पापीयान्याति चैनसः ॥
योऽपहृत्य परकीयां कृषिकृद्वाहयेद्धराम्।
स भूमिस्तेन पापेन ह्यनन्तनरकं वसेत्॥
न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा।
वाहयेन्नपथे क्षेत्रं वाहयन्दुःखभाग्भवेत्।
क्षेत्रेष्वेव वृतिं कुर्य्यात् स स्पष्टो नावलोकयेत्॥
न लङ्घयेत्पशूनासौ नाभीयाद्याश्च शूकरः।
वन्धश्च यत्नतः कार्य्यो मृगयुत्रासनाय च॥
अत्राप्युपद्रवं राजा तस्करादिसमुद्भवम्।
संरक्षेत्सर्वतो यत्नाद्यस्मात् षड्भागमौकरात्॥
कृषिकृन्मानवस्त्वेवं मत्वा धर्मं कृषे ध्रुवम्।
अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम्॥
निम्नां हि वाहयेद्भूमिं यत्र विश्रमते जलम्।
वाहयेन्न जलाभ्यर्णे अपुष्टोऽसेकसम्भवैः॥
शारद मुसुकैः स्थानं कल्वादि वापयेद्बली।
अर्धामकारकार्पासं तदन्यत्र तु हैमतम्॥
वसन्तग्रीष्मकालीय मप्यस्निग्धेषु तद्विदः।
केदारेषु तथा शालीन् जलोपान्तेषु चेक्षवः॥
वृन्ताकशाकमूलानि कन्दानि च जलान्तिके।
वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान्॥
गोधूमांश्च मसूरांश्च खल्वान् खलकुलन्तथा।
समस्निग्धेषु चाप्यानि भूमिजीवान् विजानता॥
तिला बहुविधा वाप्या अतसीशणमेव च।
मृदसु यो जगत्सर्वं वापयेत्कृषिकृन्नरः॥

सम्यक्षेत्त्वरतः सर्वान् गोवृषादीन् स्वयङ्कृषी।
चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत्॥
प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्।
तृतीये विक्रयं वक्रं चतुर्थं राजसेवनम्॥
नखैर्विलिखने यः स्यात् ब्रूयुर्दोषं मनीषिणः।
तस्याः सीरविदारेण किन्न पापं चिरतर्भवेत्॥
तृणैकच्छेदमात्रेण मोर्च्या च्चयमायुषः।
अमङ्गकन्दनिर्वासादसञ्जातम्भवेदयम्॥
यद्दर्षं मत्स्यवधानां तथा सङ्कर्षणामपि।
अह्नः कुक्कुटिकानाञ्च तद्दिने कृषिजीविनाम्॥
वधकानाञ्च यत्पापं यत्पाप म्रगयोरपि।
कदर्य्याणाञ्च यत्पापं यत्पापं कृषिजीविनाम्॥
वर्णानाञ्च गृहस्थानां कृषिवृत्त्युपजीविनाम्।
तदेनसो विशुद्धर्थं प्राह सत्यवतीपतिः।
द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा॥
धान्यभागः प्रदातव्यो देहिनः चेत्रिणो ध्रुवम्।
अप्रमय्यंद्यूतभूमौ च विप्राश्चित्तभुग्भवेत्॥
एकैकांशापकर्म स्याद्यावद्दशमसप्तमौ।
ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः॥
स तु भागः प्रदातव्यो यतिस्ते कृषिभागिनौ।
व्यूढौ तु मध्यमातायां देयोऽयः स्यात्तदंशः॥
एकैकांशाय चर्षस्तु यावद्दशमसप्तमौ।
ब्राह्मणस्तु कृषिं कुर्वन्साधयेद्दिच्छया धराम्।
न किञ्चित्कस्यचिद्द्यात्स सर्वस्य प्रभुर्य्यतः।

ब्रह्मा वै ब्राह्मणानां स्वात्मभुखमृजदादितः ॥
तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि ।
पशुपाल्यायनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः ॥
द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत् ।
यत्किञ्चिज्जगती यत्र भूगेहाश्च गजादिकम् ॥
स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् ।
तस्माच्च ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम्
ग्रामेशस्य नृपस्यापि किञ्चित्तमप्यसौ बलिम् ।
अथान्यत्सम्प्रवक्ष्यामि कृषिकृत्कृत्यकारणम् ॥
संशुद्धः कर्षको येन स्वर्गलोकमवाप्नुयात् ।
सर्वस्त्वोपकाराय सर्वत्र कृषिकृन्नरः ॥
कुर्य्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् ।
सर्वस्य स्थितिकारण्यात्म देवपितृभिः पुनः ॥
मनुष्याणान्तु पोष्याय कृषिं कुर्य्यात् कृषीवलः ।
वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीडितो द्विजः ॥
विमुक्तः सर्वपापेभ्यः स्वर्लोकत्वमवाप्नुयात् ।
चतुर्दिक्षु खले कुर्य्यात्प्राच्यामतिघनावृतिम् ॥
सैकद्वारापिधानञ्च पिदध्याच्चैव सर्वतः ।
खरोष्ट्राजारणास्तूत्र विप्रतस्तु निवारयेत् ॥
श्वशूकरशृगालादिकाकोलूककपोतवान् ।
त्रिसन्ध्यं प्रोक्षणं कुर्य्यात् दानीयाम्बुक्षणाम्बुभिः
रक्षा च भस्मना कुर्य्याज्जलधाराभिरक्षणम् ।

त्रिसन्ध्यं मर्षयेत्प्रीतां पराशरर्षिं स्मरन्।
प्रेतभूतादिनामानि न वदेच्च तदग्रतः॥
सूतिकाष्टदिवसेऽत्र कर्त्तव्यन्तत्र रक्षणम्।
हर्म्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि॥
प्रथमादिव पूर्वाह्ने नापराह्ने न सन्ध्ययोः।
धन्यो स्नानं सदा कुर्यात्प्रीताप्जनपूर्वकम्॥
यजेत खलभिक्षाभिः कलेरोहिण्यएव हि।
भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम्॥
खलयज्ञा पवित्रेषा ब्रह्मणा निर्मिता पुरा।
भागधेयमयीं कृत्वा तां गच्छन्त्वीह मामिकाम्॥
अतश्चत्वादयो वेगः पितरः सोमपादयः।
सनकादिमनुष्यांश्च येषान्ये दक्षिणायनः॥
तदुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं हली।
विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च॥
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्।
अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः॥
दीनानामप्यनाथानां कुष्ठीनां कुशरीरिणाम्।
क्लीवान्धबधिरादीनां सर्वेषामपि दीयते॥
वर्णानां पतितानाञ्च यदुद्गभूतानि तर्पयेत्।
चाण्डालानाञ्च पाकानां प्रीत्यात्युञ्चावचाद्दत्॥
ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः।
लोकाः सीरिभिः सर्वे वर्णाभिष्टकर्मेधिभिः॥
दत्त्वात्वष्टतया वाचा क्रमेणाथ विसर्जयेत्।
ततस्त्वा स्वगृहं गच्छेच्छाद्धमभ्युदयं श्रयेत्॥

शरद्वद्धेमन्तवसन्तनवान्नैः श्राद्धमाचरेत् ।
नो कृत्वानन्तदश्नीयादश्नन्तं तद्वयमश्नुते ॥
कृषानुत्पाद्य धान्यानि खलयज्ञं समाप्य च ।
सर्वरत्नैर्हरो युक्त इहामुत्र सुखी भवेत् ॥
कृषेरन्यतमो धर्मो न लभेत् कृषितोऽन्यतः ।
न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति ॥
श्वत्र्वत्वं निरन्नत्वं कृषितो नैव जायते ।
अनातिथ्यञ्च दुःखत्वं गोमतो न कदाचन ॥
निर्धनत्वमसभ्यत्वं विद्यायुक्तस्य कर्हिचित् ।
अख्यातित्वमभाग्यत्वं न सुशीलस्य कर्हिचित् ॥
वदन्ति कवयः केचित् कृष्यादीनां विशुद्धये ।
लाभस्यासंप्रदानञ्च सर्वेषां शुद्धिकृद्भवेत् ॥
प्रतिग्रहचतुर्थांशं वणिग्लाभं तृतीयकम् ।
कृषितो विंशतिश्चैव ददते नास्ति पातकम् ॥
राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम् ।
त्रयस्त्रिंशञ्च विप्राणां कृषिकर्मा न लिप्यते ॥

कृष्या च चोत्पाद्य यवादिकानि
धान्यानि भूयांसि मखांस्विधाय ।
मुक्तो म्लेच्छोऽपि पराशरप्राक्
तस्यामयः कश्चिदवादिदोषाः ॥

देवा मनुष्याः पितरश्च सर्वे साध्याश्च यक्षाश्च सकिन्नराश्च ।
गावो द्विजेन्द्राः सह सर्वसत्त्वैः कृष्यं न तृप्तानि मनाक् त्वरेति
यश्चैतदालोच्य कृषिं विदध्यात् लिप्येत पापेन स भूभवेन ।
क्षीरेत तस्यानि विदारितापि स्याद्भूतधात्री वरदानदात्री ॥

षट् कर्माणि कृषिं येतु कुर्युर्ज्ञानविधिं द्विजाः।
ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः॥
षट्कर्मभिः कृषिः प्रोक्ता द्विजानां गृहमेधिनाम्।
गृहञ्च गृहिणीमाहुस्तद्विवाहमथोच्यते॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रणीतायां कृषिकर्मगीतायज्ञोपवर्णनं नाम तृतीयोऽध्यायः॥

---

## चतुर्थोऽध्यायः।

स्वयञ्च वाहयेत् चेत्रै धान्यैश्च स्वयमर्जितैः।
कुर्याद्विवाहयागादिपञ्चयज्ञांश्च नित्यशः॥
अष्टौ विवाहा नारीणां संस्काराय प्रकीर्तिताः।
ब्रह्मादिक क्रमेणैव सम्प्रवक्ष्याम्यतः पृथक्॥
जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च।
कन्यालङ्कृत्य दीयेत विवाहो वेधमः स तु॥
रेतो मज्जति यस्याप्सु मूत्रञ्च ह्लादिकेऽनिलम्।
पुमान् स्यात् लक्षणैरेतै विंपरीतैश्च षण्डकः॥
ये यज्ञे वर्त्तमाने तु ऋत्विजः कर्म कुर्वते।
कन्यालङ्कृत्य दीयेत विवाहः स तु दैवकः॥
वराय गुणयुक्ताय विदुषे सदृशाय च।
कन्या गोद्वयमादाय दीयेतार्षः स उच्यते॥
कन्या चैव वरश्चोभौ इच्छया धर्मचारिणौ।
स्यातामिति च यत्रोक्तं दानं कार्यं विधिस्त्वयम्॥
एतावद्देहि मे द्रव्य मित्युक्ता प्राक् प्रदाय च।

यत्र कन्यां प्रदीयेत स दैवत्यविधिः स्मृतः॥
यत्रान्योन्याभिलाषेण उभयोर्वरकन्ययोः।
तयोस्तयोर्विवाहः स्याद्गान्धर्वः प्रथितः स तु॥
युद्धे हृत्वा बलात्कन्यां यत्राग्निन्याप इत्यृचा।
उह्यन्तु स तु विद्वद्भिर्विवाहो राक्षसः स्मृतः॥
सुप्तां वापि प्रमत्तां वा कन्यां छलेन भुज्यते।
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः॥
आद्या वाद्यस्य षट् प्रोक्ता धर्माश्चत्वार एव हि।
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च॥
पञ्चमश्च तयाषष्ठः स्मृतौचतु चतुर्थयोः।
द्वितीयस्यापि यत्प्रोक्ता एतयोस्तेन चाष्टमः॥
वैधस्याद्यनुरूपेण द्वितीयापरयोः स्मृतः।
सर्वसप्तममेकस्याद्वितीयस्यैव कीर्त्तितः॥
अन्त्यावत्यधमौ चोक्ता वृद्धाङ्गः शवभ्रूनुना।
दृथायुधस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः॥
वार्त्तायां प्राकृतोऽधस्ताच्चतुराद्यविवाहजैः।
स्वात्मानं द्विगुणान्वस्याद्दश सप्त च यश्च षट्॥
स्त्रीणामाजन्मशर्माथं वंशशुद्धौ प्रयत्नवान्।
वरं हि कवयो विद्वान् जात्यादिगुणसंयुतम्॥
जातिर्विद्यावयः शक्तिरारोग्यं बहुपक्षता।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः॥
जातिर्विद्या च रूपञ्च कुलञ्चैव नवं वयः।
आरोग्यत्वं विशेषेण पुंस्त्वे सत्यपि भक्षयेत्॥
जातीरूपञ्च शीलञ्च वयो नवमरोगिता।

स्वाचरत्वं विशेषेण सलक्षवरमाश्रयेत्॥
स याति रूपं वित्तञ्च तथाग्रे वयसं दृढम्।
सन्तोषजननं स्त्रीणां प्रज्ञावानाश्रयेद्दरम्॥
न जातिं नच विद्याञ्च वित्तं वाचरणं स्त्रियाम्।
किन्तु तत्प्राप्तिमिच्छन्ति तस्मात्प्रीतिकरं श्रयेत्॥
पिता यत्र सगोत्रत्वं माता यत्र सपिण्डता।
न च तामुद्वहेत्कन्यां दारकर्मण्यनादृताम्॥
कन्यायाश्च वरस्यापि सन्तोषभयो भवेद्रतिः।
तथा कन्यां वरो धीमान्वरयेद्वंशवृद्धये॥
नानामतानि सर्वेषां सतां कन्यां वरं प्रति।
सन्तानार्थं विशुद्ध्यर्थं जात्यादिषु च नान्यतः॥
दूरस्थानामविद्यानां मोक्षं धर्मानुयायिनाम्।
शूराणां निर्धनानाञ्च न देया कन्यका बुधैः॥
वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगिणीं।
अतिलोम्नीं हीनलोम्नीं मवाचमतिवाग्युताम्॥
पिता पितामहो भ्राता माता मातामहोऽपि वा।
कन्यदाः स्युः क्रमेणैते पूर्वाभावे परः परः॥
अधिकारी यदा न स्यात्तदस्याथ नृपस्य सा।
तद्गिराच स्वयङ्कन्यं कन्यापि वरयेद्वरम्॥
पिङ्गलां कपिलां कृष्णां दुष्टवाक्काकनिस्वनाम्।
स्थूलाङ्गजङ्घपादाञ्च सदा चाप्रियवादिनीम्॥
त्यजेन्नागनदीनाम्नीं पक्षिवृक्षर्क्षनामिकाम्॥
अश्विप्रत्याल्यनाम्नीश्च तथाभीषणनामिकाम्।
सुजातिमुद्वहेत्कन्यां सुरूपां लक्षणान्विताम्॥

अरोगिणीं सुशीलाञ्च तथा भ्रातृमतीमपि।
सुलक्ष्णां शुभनासाञ्च पतिप्रीतिकरीमपि॥
श्वश्रुश्वशुरगुर्वादिशुश्रूषाकारिणीं स्त्रियाम्।
अव्यङ्गकुलसञ्जाता मनभिश्वस्तवंशजाम्॥
प्रस्वेदसुभगां धाता शुभमिच्छन् समुद्वहेत्।
विप्रः स्वामपरेद्वेतु राजा स्वामपरे तथा॥
वैश्यः स्वाञ्च चतुर्थीञ्च क्रमेणैव समुद्वहेत्।
पितृभिः सप्तमीमेके मातृतः पञ्चमीमपि॥
उद्वहेदितिमन्यन्ते कुलधर्मसमाश्रिताः।
उक्तलक्षणकन्यायां कृत्वा पाणिग्रहं द्विजः॥
धर्मोद्वाहनकेनापि तदा दद्याद्धुतायनम्।
दायाद्यकाले वा दद्यात्तदुक्तं कर्मकृद्द्विजः॥
यदा वापि भवेद्भक्तिः सम्पत्तिर्वा तदा भवेत्।
ऋतावृतौ स्त्रियङ्गच्छेत् स्वेच्छया चवरं स्मरन्॥
सर्वन्तदिच्छया कुर्याद्दूयथाभर्याभवेद्गतिः।
भोज्यालङ्कारवासोभिः पूज्याः स्युः सर्वदा स्त्रियः॥
यथा किञ्चिन्न शोचन्ति नित्यं कार्य्यं तथा नृभिः।
आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्यु र्नृणां सदा॥
नश्यन्ते ते तदा प्रीतौ तासां शापात्संशयः।
स्त्रियश्च यत्र पूज्यन्ते सर्वदा भूषणादिभिः॥
देवाः पितृमनुष्याश्च मोदन्ते तत्र वेश्मनि।
स्त्रियस्तुष्टाः स्त्रियः साक्षाद्रुष्टाश्च दुष्टदेवताः॥
वर्धयन्ति कुलन्तुष्टाः नाशयन्त्यपमानिताः।
नापमान्यः स्त्रियः सद्भिः पतिश्वशुरदेवरैः॥

भ्राता पिता च माता च तथा बन्धुभिरेव च।
स्त्री यस्य पुरुषस्यापि यतोभयो भवेद्धृतिः॥
तत्र धर्मार्थकामाः स्युः स्वदधीना यतस्त्वमी।
षट् कर्माणि गृणान्तेषां येषां भार्य्या पतिव्रता।
पतिलोकन्तु ता यान्ति तपसा तेन योगवित्॥
पतिव्रता तु साध्वी स्त्री अपि दुष्कृतकारिणी।
पतिमुद्धृत्य याति द्यां काकीव पतिता व्रजाम्॥
जीवन्त्यापि मृतोवापि पतिरेव प्रभुः स्त्रियाम्।
नान्यत्तु देवता तासां तमेव प्रभुमर्चयेत्॥
अन्यस्य पि हि दुष्टा स्त्री यान्यभावा प्रियम्पतिम्।
सा गच्छेन्नरकं घोरन्तद्रोहाद्युतेऽपि च॥
नियोज्य स्वकृत्येषु सर्वदा ता नृभिः स्त्रियः।
स्वकार्यासक्तचित्तास्तास्तदेवार्हन्ति रक्षितुम्॥
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः।
लज्जा चतुर्गुणा तासां माहारश्च तदर्द्धकः॥
न वित्तं नैव जातिश्च नापिरूपमपेक्षते।
किन्तु ताभिः पुमानेष इति मत्वैव भुज्यते॥
विकुर्वाणाः स्त्रियो भर्त्तुरायुष्यधननाशकाः।
अनायासेन वा स्वस्य यथाशक्त्या भवन्ति हि॥
नारीणाञ्च नदीनाञ्च न गतिर्ज्ञायते नृभिः।
कूलं कूलं प्रयायिन्योः कालक्षेपो न जायते॥
चेष्टाचरित्रचित्राणि देवानैव विदुः स्त्रियाम्।
किं पुनः प्राणिमात्रा स्तु सर्वथा नष्टबुद्धयः॥

तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा।
श्वशुरैर्देवराद्यैस्ताः पितृभ्रात्रादिभिस्तथा॥
विवाहात् प्राक् पिता रक्षेत्ततः पतिस्तु यौवने।
रक्षेयुर्वार्द्धके पुत्राः नास्ति स्त्रीणां स्वतन्त्रता॥
स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः।
न स्वातन्त्र्यं मतस्तासां प्रजापतिरकल्पयत्॥
अशौचाश्च सशौचाश्च अमेध्या अपि पावनाः।
दुर्वाच्योऽपि सुवाचस्ताः तस्मादभ्यर्चयेत्ततः॥
शौचं वाचं च मेध्यत्वं सोमगन्धर्वपावकाः।
ददुस्तासां वरामेताः तस्मान्मेध्यतराः स्त्रियः॥
भर्त्तारो वो भविष्यन्ति युष्मच्चित्तानुसारिणः।
रक्षणीयास्तत स्तास्तु सर्वभावेन योषितः॥
समाश्रयस्थ मित्राद्यैर्देवन्यस्तां नृणां तनौ।
अर्धकाया नृणां तासा. पृथक् धर्मादिना स्त्रियम्॥
नदी वापी स्त्रियं गच्छेन्न सगर्भां व्यवस्थिताम्।
अभिगच्छेदविद्वान् यस्तदा भूः क्षयमेति च।
नदी वापी स्त्रियं गच्छेदिच्छं स्वेच्छयापि च॥
न पर्वसु न सन्ध्यासु नाद्यार्त्तु चतुरात्रिषु।
सन्ध्याष्टमेऽधिवक्तव्या नवमे च स्वतन्त्रजा॥
एकादशी स्त्रीजननी सद्यश्चाप्रियवादिनी।
न वक्त्रेऽभिगमं कुर्य्यात्पाणी गृहीतयोषितः।
कुर्य्याच्चेत्पितरस्तस्य पतन्ति रेतसोभुजः॥
भार्य्याधीनं सुखं पुंसां भार्याहीनं गृहं वनम्।

भार्याधीना सुखोत्पत्तिः भार्याधीनः शुभोदयः ॥
यत्र भार्या गृहं तत्र भार्याधीनं गृहं वनम् ।
न गृहेण गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
गृहीस्याद् गृहधर्मेण स वै पञ्चमखादिकाः ।
तद्धीनो न गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
श्रौतो वा यदि वा स्मार्त्तः सर्वेषां गृहमेधिनाम् ।
कण्डन्युदककुम्भीच चुल्ली पेषण्युपस्करम् ॥
पञ्चयज्ञविधानेन कुर्यात्पञ्च महामखान् ॥
पञ्चसूना वहन्त्यत्र सूनादोषो न विद्यते ॥
यदादौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः ।
अध्यापयेद्द्विजान् शिष्यान् स वै ब्रह्ममखः स्मृतः ॥
यः स्नात्वाऽम्बरः कुर्या द्देवांश्च मनुजान् पितॄन् ।
तर्पयेदम्भसा भक्त्या पितृयज्ञः सवै मखः ॥
श्रौतेवा यदि वा स्मार्त्ते यज्जुहोति हुताशने ।
विधिवद्विः सवै विप्रः स तु देवमखः स्मृतः ॥
दशस्वाशासु यः कुर्याद्भुतशेषो वलिं द्विजः ॥
इन्द्रादिभ्यस्तथान्येभ्यः स वै भूतमखो मतः ।
समागतातिथिं भक्त्या यद्भोजयति नित्यशः ॥
अन्यानभ्यागतांश्चैव समानीयेष्टि रुच्यते ।
एवं पञ्चमखत्वं स्यान्मधुमांसाज्यपायसम् ॥
स सन्तर्प्य पितॄन् देवान् मनुजः स्वर्गमाप्नुयात् ।
गृहस्थायौषधिं मत्वा त्यागं धेनुं चतुःस्तनीम् ॥
स्वर्गौकसः पितॄन् देवान् पुण्यातिथिवरानपि ।

स्वर्गौकोभिः पितृभ्यस्तु पुज्यासोऽतिथयो द्विजैः ॥
चत्वारस्तु सुता एते यजुर्वेद उदाहृतः ।
स्वाहाकारो वषट्कारो हन्तकार स्तथा स्वधा ॥
दैवानि भागधेयौ द्वौ अन्यश्च मनुजां स्तथा ।
पितॄणाञ्च चतुर्थस्तु इतिवेदनिदर्शनम् ॥
इति निष्टत्य विधिवत्सकलं कर्म नैत्यिकम् ॥
प्राणाग्निहोत्रविधिना भुञ्जीतान्न मघापहम् ।
अदत्त्वा पोष्यवर्गस्य ह्युक्तत्वाऽध्यापनादिकम् ॥
अमात्रिकञ्च योऽश्नीयात्सोऽश्नीयात्किल्बिषं द्विजः ।
प्राङ्मुखादिक्रमेणाश्नु दिव्यायुः कीर्तिकीर्त्तितम् ॥
दिव्याग्निस्नानमश्नाद्याद्दूयन्तदश्नन्ति राक्षसाः ॥
अथ प्राणाग्निहोत्रस्य श्रूयतां द्विजसत्तमाः ! ॥
वक्ष्यमाणो विधिः पुन्यः पावनः प्रेत्य चेह च ।
यो विधि दैवतान्यस्तु संसारबन्धनाशकृत् ॥
तद्विदस्तु दिवं यान्ति मुक्ता देवान् ऋणेन च ।
उद्धरेद्यदि सत्वाश्नु पुरुषानेकविंशति ॥
सर्वेष्टिफलभाक् यायाद्ब्रह्म धर्मं क्षय मक्षयम् ।
यः कालाकालविद्विप्रो नैनःस्पर्शो स कर्हिचित् ।
सोऽस्पृष्टो नाविशेत्तत्र यक्ष्मया नैव संस्तौ ।
द्व्यपञ्चाङ्गुलव्याप्तं नासिकाया बहिःस्थितम् ॥
जीवो यत्र विशुद्धोत सा कला षोड़शी स्मृता ।
सर्वमेतत्तया व्याप्तं त्रैलोक्यं सचराचरम् ॥
ब्रह्मविद्येति विख्याता वेदान्ते च प्रतिष्ठिता ।

न वेदं वेदमित्याहुर्वेदन्नाम परम्पदम् ॥
तत्पदं विदितं येन स विप्रो वेदपारग:।
आकृति: सा परा ज्ञेया सा च शान्ति: प्रकीर्तिता।
गायत्री सा च विज्ञेया सा च सन्ध्या प्रकीर्तिता ॥
तज्जप्य तच्च वै ज्ञेयं तद्व्रतं तदुपासितम्।
तां कलां यो विजानाति स कलज्ञो द्विज: स्मृत:॥
यत्तुरीयं पदं प्रोक्तं यस्मिन् लीन मिदं जगत्।
तत् ज्ञात्वा परमं तत्त्वं न भूय: पुरुषो भवेत् ॥
प्राणमार्गास्त्रय: प्रोक्तास्तिस्रो नाड्य: प्रकीर्तिता:।
ईड़ा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥
ईड़ा च वैष्णवी नाड़ी ब्रह्माख्यी पिङ्गला स्मृता।
सुषुम्ना चेश्वरी नाड़ी त्रिधा प्राणवधा स्मृता ॥
उत्तरं दक्षिणं ज्ञेयं दक्षिणोत्तरसंस्थितम्।
मध्येतु विषुवं ज्ञेयं पुटद्वयविनि:सृतम् ॥
संक्रान्तौ विषुवञ्चैव यो विजानाति विग्रहम्।
नित्यमुक्त: स योगी च ब्रह्मादिभिरुच्यते ॥
मध्याह्ने चार्धरात्रे च प्रभातेऽस्तमये तथा।
विषुवन्तं विजानीयात्पुटद्वयविनि:सृतम् ॥
हृत्पुण्डरीकमरणीं मनोमन्थनमेव च।
प्राणरज्वा न्यसेदग्नि रात्माध्वर्यु प्रतिष्ठित: ॥
ज्वालयेत्पूरकेणाग्निं स्थापयेत्कुम्भकेन तु।
रेचकेणोर्ध्ववक्त्रेण ततो होमं करोति य: ॥
यत्तद्धृदि स्थितं पद्ममधोनालं व्यवस्थितम्।

तद्दै विक्रासते पद्मं प्राणवन्तश्च सर्पति॥
वामहस्तधृते पात्रे दक्षिणे चाम्भसि स्थिते।
सनाद सुश्चरेद्विप्र आच्छन्नाग्रन्तु पूरयेत्।
पूरयेत् पूरकं प्राज्ञ निश्चलं कुम्भकं भवेत्।
विनिहत्य शनैर्वायुं रेचकान्तं विनिर्दिशेत्॥
स्वाहान्तैः प्रणवाद्यैश्च स्वस्वनाम्ना च वायुभिः।
जितात्मा योषितः षष्ठः षडाकृत्याकृतिं भवेत्॥
जिह्वादन्तं ग्रसेदन्नं दन्तैश्चैव न तत् स्पृशेत्।
दशनैः स्पृष्टमात्रेण पुनराचम्य चारभेत्॥
मुखमाहवनीयोऽग्निर्गार्हपत्य स्तथोऽन्तरे।
उदये दक्षिणाग्निश्च ग्रहाग्निश्चापि दक्षिणे॥
सभ्यश्चोत्तरतश्चान्य इत्यग्निस्मरणाक्रमः।
प्राणाद्येव हि होतादि चिन्तयेत्तद्वदेव तु॥
होतारं प्राणमित्याहुरुद्गातारमपानकम्।
ब्राह्मणं व्यानमित्येके उदानाध्वर्युमित्यपि॥
समानश्चेह दज्वान मिति ऋत्विक् क्रमं बुधः।
अहङ्कारं पशुं कृत्वा प्राणञ्च पशुमित्यपि॥
बर्हिः प्रत्यरणिः पृथ्वी लोमानि च कुशाः स्मृताः।
मनोविभक्ता त्वग्जिह्वा इति तास्ते प्रचक्षते॥
कृत्वा तु मात्मोद्धारं ऊङ्कारञ्च तथा पुनः।
उच्छिष्ठज्ञनताग्रे च हरिल्लोहितपिङ्गलः॥
सुप्तः परिधये तुभ्यं गुहस्फि दैवतञ्च यत्।
विजिह्वा यो जाठराग्नेः स्वाहा प्राणाय वाप्यय॥

इन्द्रगोपककवर्णाय त्रिजिह्वायाग्निदैवतम्।
ॐ स्वाहा प्रानाय स्वाहाकारान्त मुच्चरेत्॥
गोक्षीरसमवर्णाय पर्जन्यवह्निदैवतम्।
स्वाहोदानाय सोङ्कार मनलाय परार्चिषे॥
तडित्समानवर्णाय वाय्वाग्निर्दैवतायते॥
ॐ स्वाहाच समानाय ॐ स्वाहा चाह वेधसे।
तर्जनीमध्यमाङ्गुष्ठै र्लग्नप्राणस्य चाकृतिः॥
मध्यमानामिकाङ्गुष्ठै र्व्यानस्य परिकीर्तिता।
कनिष्ठानामिकाङ्गुष्ठै रपानायाकृतिः स्मृता॥
मध्यमानामिकाख्यन्या मुदाने कुर्यादबुधः।
समाने सर्वेकह्नत्य स्वाकृतिः स्यात्समानता॥
जलं पीत्वा तु तृप्यन्ति रेचयञ्च शनैः शनैः।
ततोऽन्यद्द्रव्यमश्नीयात् पूरणायोदरस्य च॥
विधिं प्राणाग्निहोत्रस्य ये द्विजा नैव जानते।
अपानेन तु भुञ्जन्ते तेषां सुखमपानवत्॥
यो ज्ञात्वा तु विधिं भुक्ते यथोक्त मिदमाचरेत्।
इहामुत्र च पूज्यत्वं ब्रह्मभूयाय कल्पते॥
त्रिःसप्तकुलमुद्धृत्य दातुरप्यक्षयं भवेत्।
दातुरपि हि यत्पुण्यं भोक्तुश्चैव हि तत् फलम्॥
दाता चैव तु भोक्ता च तावुभौ स्वर्गगामिनौ।
यो जानाति विधिं चेमं स भवेद्ब्रह्मवित्तमः॥
एकं पिवति गण्डूषं यजेदर्द्धं धरातले।
पीतेन पितृतृप्तिस्तु भूमौ च भूमिदेवता॥

पिबेद्वृद्धि..ीयं गण्डूषं ब्राह्मणो ज्ञानदुर्बलः।
स हतः पितृदैवत्य मात्मानं नरकं व्रजेत्॥
रहस्यं सर्वशास्त्रेषु सर्वशास्त्रेषु दुर्लभम्।
ज्ञानाना मुत्तमं ज्ञानं न कस्यचित्प्रकाशयेत्॥
ज्ञानानि च प्रकाश्यानि पुंसामविदुषां वदेत्।
स प्राप्नस्य फलं तेषा मात्मानं नरके नयेत्॥
अश्नीयाद्विधिवच्चस्तपात्रः कृतपरीहृतः।
पूजितान्नमवाग्जुष्टः स पैशाच ममाह्निकम्।
वाग्यतत्त्वस्तपात्रोऽपि त्रियामान पि वा द्विजः॥
तस्य त्रिरात्रपुण्यस्तु दानेऽपि कवयोविदुः।
चतुस्त्रिकोणाङ्कृता च विप्रक्षत्रविशां क्रमात्॥
वदन्ति परिकल्पयन्ति तडीनान्नम् राक्षनम्।
नाश्नीयात्प्रागपोशानं तथा भुक्त्वा सकृन्नृपः॥
अनग्न मद्भुतं तत् स्यात् भक्तमन्नं द्विजन्मना।
काले भुक्त्वा समुत्थाय प्रोष्य विप्रं समीक्ष्य च॥
अह.पतिस्तत्र स्थित्वा चिन्तयेद्वहुकृत्यकम्।
भार्य्या भोजनवेलायां भिक्षां सप्ताय पञ्च वा॥
दत्त्वा शेषं समश्नीयात्सापत्यभृत्यकैः सह।
निहत्य माऽपि सकलं किञ्चित् स्थित्वा सुखेन च॥
स्वस्वीयकृत्यकार्य्येषु सापि सा त्वपरा पुनः।
उपास्य पश्चिमां सन्ध्यां कृत्वा चैवाग्न्युपुत्तिाम्॥
किञ्चित्पञ्चशतमश्नीयात्सायं प्रातरिति श्रुतिः।
स्वाध्याय मभ्यसेत्किञ्चित् यामद्वयमधीति च॥

शयानो मध्यमौ यामौ ब्रह्मभूयाय कल्पते।
सुशयने शयीताद्ये एकान्ते च स्त्रिया सह॥
सेवनं मैथुनादीनां वदन्ति मुनिपुङ्गवाः।
ऋतुसमयात् सुपुत्रार्थी आधानविधिना द्विजः॥
प्रसह्य भस्मना योनि मितितस्त्वेति दर्शनात्।
कृत्वाधानविधानन्तु स्त्रीयोग मभ्यसेत् पुनः॥
मन्येदविक्षतौ योनौ विकाराद्विकृताः प्रजाः।
ब्रह्ममुहूर्त्तमुत्थाय प्रातःसन्ध्या मुपक्रमेत्।
आसूर्य्योदयनात्प्रातः मायङ्कै वर्च्चदर्शनात्॥
अनृतं मद्यगन्धञ्च दिवामैथुनमेव च।
पुनाति वृषलस्यान्नं सन्ध्या वह्निरुणासिता॥
सिन्दुरारुणाभं भाति यौवनं यौवतारति।
उदयेऽस्तसमये भानौ तावत्सन्ध्येति शक्तिजः॥
आधानतो द्वितीयेतु मासे पुंसवने भवेत्।
सीमन्तोन्नयनं षष्ठे कार्य्यं मासेऽष्टमेऽपि वा॥
जातस्य जातकर्मादि विधिवच्छास्त्रपूर्वकम्।
दिने चैकादशे नामकर्मादिवद्विजन्मनाम्॥
तुर्य्यनिष्क्रमणं मासे षष्ठेऽन्नप्राशनं तथा।
चूड़ाकर्म द्वितीयेऽब्दे कार्यं वा कुलधर्मतः॥
सर्वं क्रियां विमन्त्रं तु कार्यं कार्यविमुक्तये।
न सूर्य्यस्य द्विजाः ख्याताः स्त्रियास्त्वैव कथञ्चन॥
स व्रात्यः स परित्याज्यो द्विजो यस्माद् द्विजन्मनाम्।
मुञ्जमौर्वशणानान्तु त्रिवृता रशना स्मृता॥

कार्पासशणमेषोर्णाश्च्युपवीतानि निर्दृतिः ।
पालाशवटपीलूनां दण्डाश्च क्रमशः स्मृताः ॥
कार्ष्णं च रौरवं वास्त मौञ्जनानि द्विजन्मनाम् ।
शिरोललाटनासान्तः क्रमाद्दण्डाः प्रकीर्तिताः ॥
अव्रणाः सत्वचो दग्धा वक्राः शुभकरा नृणाम् ।
गायत्र्या त्रिष्टुप् जगत्या तथाद्यासुपनायनम् ॥
गायत्र्यामिव शेषो वा युक्तादित्यपरेषु च ।
सवितुः पाठः सवितुर्विश्वारूपाणि वक्रमात् ॥
औपासनायिका मन्त्रा विप्रादीनां सुदाहृताः ।
ब्रह्मणो विप्रगेहेषु नृपस्येषु नमेषु च ॥
वैश्यो विप्रो नृपः स्वेव कुर्याद्भिक्षां स्ववृत्तये ।
एकान्नश्च द्विजोऽश्नीयाद्ब्रह्मचारी व्रते स्थितः ॥
भिक्षाव्रतं द्विजातीनां उपवाससमं स्मृतम् ।
प्रतिग्रहो न भिक्षा स्वा न तस्याः परपाकता ॥
सोमपानसमा भिक्षा यतोऽश्नीत स भिक्षया ।
भिक्षया यस्तु भुञ्जीत निराहारः स उच्यते ॥
भिक्षामभ्याभिशस्तेषु सागारेषु द्विजेषु च ।
भिक्षेत भिक्षां सततो गुरोः कुलं विवर्जयेत् ॥
स्वसारं मातरञ्चापि मातृस्वसारमेव च ।
भिक्षेत प्रथमां भिक्षां याचेतं न विमानयेत् ॥
भवति ! भिक्षां मे देहि भिक्षां भवति ! देहि मे ।
भिक्षां मे देहि भवति ! क्रमेणोदाहरेत् ॥
द्वादशाब्दं व्रतं धार्य्यं षट् त्र्यब्दं तु श्रुतिं प्रति ।
आदित्याब्दे व्रजेत्तद्वै दत्त्वा तु गुरवे वरम् ॥

त्रयस्तु स्नातकाः प्रोक्ताः विद्याव्रतोपसेविनः।
विद्यां समाप्य स स्नायाद्विद्यास्नातक उच्यते॥
समाप्य च व्रतं यस्तु व्रतस्नातक उच्यते।
द्वयं समाप्य यः स्नायात्स विनामाभिधीयते॥
अष्टैकद्वादशाब्दानि सगर्भाणि द्विजन्मनाम्॥
मुख्यकालो व्रतस्यैष त्वन्य उक्तो विपर्यये॥
द्विगुणाब्देषु कर्त्तव्या क्रमादुपनतिर्द्विजे।
हीनगायत्रीच व्रात्या उक्तकालादनन्तरम्॥
नाध्येयो नैव चोद्वाह्यो व्यवहारविवर्जितः।
न याज्यानार्थकार्य्येषु प्रयोज्यास्तु इति स्मृतिः॥
स्त्रीवन्निर्लोमवक्त्रा ये निर्लोमदेहवक्षसः।
उदरस्थानपत्याश्च षट्स्थास्ते विगर्हिताः॥
येऽजस्रं विगर्हितं कुर्युः प्राप्नुयुस्ते सदा शुभम्।
दीर्घायुष्ट्वं प्रजावत्त्व मरोगित्वं यशोदिवम्॥
क्षीणायुष्यं दरिद्रत्व मप्रजत्वं मरोगिताम्।
गर्हितत्वं च लोकेऽत्र विदुर्निषिद्धकारिणः॥
प्रातर्वा यदिवा साय मद्यादन्नमनर्चितम्॥
नानाज्यस्थानपोशानं शुभमेप्सु द्विजन्मनाम्।
आपोशानं विना नाद्यान्नाद्यादन्न मनर्चितम्।
अनाज्यं न दिवा सायं शुभमिच्छन् समश्नुते॥
षोड़शाब्दानि विप्रस्य द्वाविंशति नृपस्य च।
चतुर्विंशतिरब्धस्य व्रात्यास्ते स्युरतः परम्॥
उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः।
न व्यवहार्यास्त्वाज्याश्च इति धर्मविदो विदुः॥

स्त्रीणामुद्वाह एको वै वेदोक्तःपावनो विधिः ।
स्त्रीपुंसोर्यत्र विन्यासः सुस्थोरन्योन्य मुच्यते ॥
स्वस्मिन्यस्मादिमर्थ्यैषा पतिर्बिभर्ति सोऽपि ताः ।
अतो भार्या च भर्ता चेत्यत्र वेदो निदर्शनम् ॥
पतिर्विशति यज्जायां गर्भो भूत्वेह मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
जातोऽस्मा तेन जाया वै यदस्यां जायते पुनः ।
इयमाभवनं भार्य्या वीजमस्यां निषिच्यते ॥
देवा ऋषयो मनुष्याश्च भार्य्या तु जननी तु यः ।
आत्मना जायते ह्यात्मा सेरावत्यतितारिणीम् ॥
भार्य्या जाया जनन्येषा इति वेदप्रतिष्ठितः ।
यस्मात्त्रातिपुंनाम्नो नरकात् पुत्र उच्यते ॥
सर्वां संसृष्टिमाहृत्य तद्गतं ब्रह्मणैकताम् ।
यः पिता जातपुत्रस्य पश्येच्चेज्जीवतो मुखम् ॥
सर्वं मे सफलं प्राप्तं मैहिकामुत्रकञ्च यत् ।
किं दण्डै रजिनैस्तीर्थैस्तपोभिः किं समाधिभिः ॥
पुमांसः ! पुत्रमिच्छध्वं स वै लोके वदावदः ।
प्राणान्नमुष्मिन् शरणं हि वासो रूपं हिरण्यं पशवो विवाह
सखा च यज्वा कृपणाश्च पुत्री ज्योतिः परस्मुच्च इहाप्यमुत्र ।
स पुण्यकृत्तमो लोके यस्य पुत्रश्चिरायुषः ।
विशेषेण हि धर्मज्ञः स परं ब्रह्म विन्दति ॥
पुत्रेण प्राप्यते स्वर्गो जातमात्रेण तु ध्रुवम् ।
तस्मादिच्छन्ति सर्वेऽपि पशवोऽपि वयांसि च ॥
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ।

पुत्रस्यापि न पुत्रत्वं य स्त्राति नरकार्णवात्।
यः पिता स तु पुत्रस्तु आर्येवर्हि जनन्यपि॥
न पृथक्त्वं विदुस्तज्ज्ञा अनयोः परयोरपि।
अयं हि पन्था पुत्रपस्य तस्य ध्रुवं भवेत्पुत्रजन्मेह यस्य।
तद्वीक्ष्य चोर्ध्वं पशवो वयांसि पुत्रार्थिनो मातरमारुहन्ति॥
जनिष्यमाणा दृच्छन्ति पितरः स्वकुले सुतान्॥
कश्चिद्गत्वा गयायां नोऽवश्यं पिण्डान् प्रदास्यति।
यजत्यश्वोऽश्वमेधेन नीलं मोक्ष्यति गोगृहे॥
दृष्टव्यं पितृभिः सर्वपुत्रेभ्यः सकलं फलम्।
शुश्रूषौर्यकश्चित्तो वा प्राणान्मोक्ष्यति गोगृहे॥
दानदो वा कुरुक्षेत्रे ज्ञानी वाथ भविष्यति।
पुच्छे शिरसि यः शुक्लः शुक्लपा लोहितं वपुः॥
देवाद्यभीष्टो नीले यः कृष्णः पावनो वृषः।
रक्तो वा यदि वा शुक्ल अनुविषाणः शुभेक्षणः॥
यो न हीनातिरिक्ताङ्ग स्वं वा वृषं समुत्सृजेत्।
दुहितापि तथा साध्वी श्वशुरयो रूपासक्तत्॥
पतिव्रता च धर्मज्ञा अपि दुर्गतिलङ्घयेत्।
यः पिता स वै पुत्र स्तत्समा दुहितापि च॥
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ।
तत्सुतः पावयेद्दंशान् लोभ्यौ मातामहादिकान्॥
दौहित्रः पुत्रवत् स्वर्गं उक्तो शास्त्रैश्च तौ समौ।
आधानादिकसंस्काराः प्रोक्ताश्चैव द्विजन्मनः॥
कर्त्तव्याश्च स्वशाखोक्ताः केचित् कुलक्रमेण च।

चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्तिताः ॥
मन्त्रदीक्षा च विविधा तथैवाध्येष्टिकर्म च ।
कुलाचारोऽपि कर्त्तव्य इतिशास्त्रविदो विदुः ॥
देशाचार स्तथाधर्म इति प्राह पराशरः ।
अयं हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ।
रोगभागीच सततं व्याधितोऽल्पायुरेव च ॥
आचारे व्यवहारे च दुराचारो विपर्य्ययः ।
नृणामाचारतो धर्मः स्यादधर्मो विपर्ययात् ॥
आचारवन्तो मनुजा लभन्ते आयुश्यवित्तं च सुतश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोक मत्रापि विद्वज्जनपूजितांश्च ।
वेदाः महाङ्गैः स पुराणविद्याशास्त्राणि वेद्यानिच तद्विहीनम्
कुर्युर्नवैतानि च सम्भृतानि नरं पवित्रं प्रवदन्ति वेदाः ।
येऽधीतवेदाः क्रियया विहीना जीवन्ति वेदैर्मनुजाधमास्तान्
वेदास्त्यजेयु र्निधनस्य काले नीडं शकुन्ता इव जातपक्षाः ।
आचारहीननरदेहगताश्च वेदाः
शोचन्ति किन्तु कृतवन्त इतिस्म चित्ते ॥
यं नो भवेद्वपुषि चास्य शुभप्रहीणे
स्थानन्तदत्र भवबन्धननाशकर्त्ता ।
कर्त्तव्यं यत्नतः शौचं शौचमूलं द्विजातयः ।
शौचाचारविहीनानां सर्वाः स्यु र्निष्फलाः क्रियाः ।
तच्छद्धि र्द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ।
विण्मूत्रशोधनं वाह्यं चित्तशुद्धिस्तथान्तरम् ।

गन्धलेपायनं च त्यां शौचमाहुर्मनीषिणः ॥
मृद्भिरद्भिर्निलयस्य तत्कर्त्तव्यं द्विजातिभिः।
भावशुद्धिपरं शौच माहुराभ्यन्तरं बुधाः ॥
यस्य पुंसस्तु यच्छौचं शौचैस्तथ्यं किमन्यकैः।
वाङ्मनोजलशौचानि यशः सदा द्विजन्मनाम् ॥
त्रिभिः शौचैरुपेतो यः स स्वर्गी नात्र संशयः।
स्त्रियं रिरंसुर्द्रविणं जिहीर्षुर्वधं चिकीर्षुर्मनुजः परस्य।
विवदुरत्यन्तमवाच्यवाचं कथं स शुद्धिं समुपैति शौचात् ॥
किं निकामस्य नारीभिः किं गतारोषस्य समं द्विजैः।
यतेन्द्रियस्य किं शौचै निष्फलं। मुर्खदानवत् ॥
न गतिर्मूर्खदानेन न तारोऽम्बुनि चाश्मनः।
तस्मात्तस्य न दातव्यं सह दाता स मज्जति ॥
यथा भस्म तथा मूर्खो विद्वान् प्रज्वलिताग्निवत्।
होतव्यश्च समिद्धाग्नौ जुहुयात्को नु भस्मनि ॥
यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत् तथा।
शूद्रेण सह सम्बेषं मूर्खे दानं विवर्जयेत् ॥
ग्रहीता च तावद्विद्वान् तद्दाता रोहको यथा।
आत्मानं तारयेत्तश्च नदीं वैतरणीं द्विजः ॥
यो मूर्खो विप्रदाचारः षट्कर्माभिरतः सदा।
स नयन् स्वर्गं मात्मानं तृणांश्चैव न पीड़येत् ॥
न विद्यते तयोर्यस्य षदद्यु प्रतिग्रहम्।
षदृदानः स दातारमात्मान मप्यधो नयन् ॥
हेम भूमिं तिलान् गाश्च अविद्वान् द्विः ददाति यः।

भस्मीभवति सोऽज्ञाय दातुः स्यान्निष्फलं भवेत् ॥
तस्माद्ददति नो दद्यादल्पशोऽपि प्रतिग्रहम् ।
विषतत्त्वापरिज्ञानी विषेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्य मर्चितम् ।
विद्वद्भिर्मत्स्यपात्रे तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
मद्विप्रास्तान्न गृह्णीयु र्गृह्णन्त स्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे मार्गगां द्विमुखीं गजम् ।
नवश्राद्धान्नभुक्तश्च वर्ज्या निर्माल्यवद्द्विजाः ॥
एते यान्त्यन्धतामिस्रं यावन्मनुसहस्रकम् ।
हिरण्यश्च वस्त्रञ्च रत्नञ्च जाता
पृथ्वीच येयञ्च मुनिश्च गोश्च ।
कालेच पात्रे विधिना प्रदत्तः
प्राप्नोति लोको नियमे तदुक्तम् ॥
वेदाविद्वान् सदाचारः सदा वसति सन्निधौ ।
भोजने चैव दाने च वर्जनीयो न सत्तमैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो व्यतिक्रमेत् ।
भोजने चैव दानेच हिनस्त्यासप्तमं कुलम् ॥
अनृचोऽपि निराचाराः प्रतिवासिनिवासिनः ।
अन्यत्र हव्यकव्याभ्यां भोज्यास्ते वत्सवादिषु ॥
प्रोक्ताप्रतिग्रहाभावे प्राप्तायां बृहदापदि ।

विप्रोऽस्मिन् प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक्॥
गुर्वादियोग्यवर्गार्थं दैवाद्यर्थञ्च सर्वतः।
गृह्यात्ग्द्यात् द्विजाग्र्यन्न भत्यर्थमात्मनोऽपि च॥
दधिक्षीराज्यमांसानि गन्धपुष्पाम्बुमत्स्यकान्।
शय्यासनाशनं शाकं प्रत्याख्येयं नहि क्वचित्॥
अपि दुष्कृतकर्मभ्यः समादद्यादयाचिता।
पतितादिस्तदन्येभ्यः प्रतिग्राह्यमसंशयम्॥
शक्तः प्रतिगृह्णीतु यो वेदशुत्तम् संवृतम्।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितः॥
प्रतिग्रहमृणं वापि याचितं यो न यच्छति।
तत्कोटिगुणग्रस्तोऽसौ मृतो दासत्वमृच्छति॥
दाता च यः स्मरेद्दानं प्रतिग्राही न पात्यते।
उभौ तौ नरकं यातो दाता चैव प्रतिग्रही॥
अपात्रस्य हि यद्दत्तं दानं स्वल्पमपि द्विजः।
गृहीता तत्क्षणाद्याति भस्मत्वञ्चाप्यवारितः॥
वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति।
प्रत्यक्षलिङ्गमेवेह दातृयाचकयो रतः।
दातृहस्तो भवेदूर्द्धं मधस्तिष्ठेत्प्रतिग्रही।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचितः॥
सूनादीनाञ्चतुर्वर्णां तथा निन्दितभूयते।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यधः॥
पुष्टो दशगुणं पूर्वात् सुनिश्चयमघाधिकृत्।
वैश्यो निषिद्धनृपतिप्रतिग्राही परे क्रमात्॥

परपाकं वृथामांसं देवानामृषिदूषितम् ।
अनुपाककृतं चैव तथा मांसञ्च मादिकम् ॥
न भोक्तव्यमभोज्यान्नं कन्दमूलादिकञ्च यत् ।
न पातव्यं न पेयञ्च द्विजैरन्नं न गर्हितम् ॥
मद्यमुक्तः सदा ब्रूयाच्छनैर्धर्मं समाचरेत् ।
यमान् स नियमान् कुर्याद्गार्हस्थं व्रतमाचरेत् ॥
मातृपितृउपाध्यायान् गुरूंस्त्वमान् सदार्चयेत् ।
एतान् श्रेष्ठान् तथाचान्यान्नित्यं विप्रोऽभिवादयेत् ।
दमञ्च सर्वदा कुर्य्याद्दानं दद्याच्च सर्वदा ।
दयाञ्च सर्वदा कुर्य्यात्तद्विना नरकाश्रयः ॥
दाम्यन् स सर्वदात्मानं दाम्ययन्तु सदा द्विजः ।
दयध्वमिति वै वेदाः ! श्रुतिर्वाजसनेयिकी ॥
दत्त्विधा कारकं कुर्य्यात् स्तनयित्नुर्ध्वनिन्दिवि ।
ददेद्देति दमं दानं दयामिति च शिक्षयेत् ॥
रसारसैः समा ग्राह्या देया अपि च नान्यथा ।
न रसैर्लवणं ग्राह्यं समतो हीनतोऽपि वा ॥
तिला अपि समा देया यस्मात् अपिच नान्यथा ।
प्रपीड्यानि न यन्त्रेषु ब्रूयुरेतन्मनीषिणः ॥
विक्रयं व्यपदेशेन दुग्धदध्यादिसर्पिषम् ।
शुश्रूषां न तिरस्कुर्य्यादुपासां नावधीरयेत् ॥
न निन्द्यांश्च समाभ्यर्च्यान्न विक्रीणीत गर्हितान् ।
अदेयानि नवै दद्यादत्याज्यानि न वै त्यजेत् ॥
अभाष्यं नैव भाषेच्च होमाद्याश्च न क्षिपेत् ।

न संवदेच्च पित्राद्यैः पतिताद्यैर्न संविशेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च ।
मतिं शूद्रस्य यो दद्याद्येचैनं पर्युपासते ॥
न किञ्चित्तस्य चादेयं व्रतादिनियमादिकम् ।
आचक्षणास्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्नं निषिद्धस्थं स्पृष्टाद्वा नाङ्करादिषु ।
वेदविद्याविताननि विक्रीणीत न कर्हिचित् ॥
नापात्यानि रसाद्यानि भूतिचिश्वाम्बयेऽपि च ।
नापच्येत्तु स्वपाणिभ्यां न च कण्डूतिकृद्भवेत् ॥
पादुका नच पालाशा न वृक्षादिनिकृन्तनम् ॥
नोत्सृज्यं ष्ठीवनाद्यञ्च कदाचिद्वै गवादिषु ।
पद्भ्यां स्पृष्टो गवाघ्रातो नोच्छिष्टो न च तद्गतिः ॥
न लङ्घ्या वस्त्रनस्यादि वाय्वग्न्यो नान्तरा गतिः ।
न द्वयोर्विप्रयोर्नाग्न्योः सौरभेयोः पतिस्त्रियोः ॥
न विप्राग्न्योर्विप्रपिण्डौ नो ग्राव्णो विष्णुतार्क्ष्ययोः ।
सौरभेयोर्जलाग्न्योश्च माहेयीजलयोरपि ॥
भानुव्योमादिकानान्तु न कुर्य्यादन्तरागतिम् ।
भोजनादिषु नासक्तां पश्येन्न विगतांशुकाः ॥
न गच्छेत् स्त्रीं रजोयुक्तां न च तया सहाश्नुयात् ।
उत्तरीयं विना नैव न नग्नो न शयीत च ॥
न गेहे चैव मार्गादौ न निषिद्धककुम्मुखः ।
नापगाङ्गेयचर्यादि नचविष्ठा रटहान्तिके ॥
अतिकालातियाने च शुभमिच्छन्विसर्जयेत् ।

यश्चेन्द्रचापमङ्गाद्या मूलनाम्ना न निर्दिशेत्।
इन्द्रचापं ध्यायन्ति ये न खातव्याः परस्य ते।
वर्जयेद्वादनश्चैव पादयोः कांस्यभोजने॥
पैशुन्यं मर्मभेदश्च न वदेन्म्लेच्छभाषितम्।
प्राकृतं वक्त्रशास्त्राणि पाषण्डहेतुकानि च॥
न करं मस्तके दद्यान्मस्तके न करं तथा।
न जातु नो शिरोधार्य्यं न प्राहत्तच्छिरा भ्रमेत्॥

वेनाश्च वन्ध्या कदर्यचौराः क्लीबाभिशस्तागणिकाम् जातु।
यो वृत्तजीवी गणदीक्षका ये तेषां न भोज्यं त्वशनं द्विजातेः॥
क्रूरातुरा वृत्तचिकित्सकाश्च या पुंश्चली यौ च विरुद्धशत्।
व्रात्याश्च मत्ता अवशा जिताश्च अग्रांस्त्वमेषामशनं द्विजस्य॥
ये दाम्भिका येच सुवर्णकारा उच्छिष्टभोजी पतितश्च यश्च।
ये पुत्रभार्या बहुयाचका ये विप्रस्य नैकेऽपि न भोज्यमन्नम्॥
यः सोमशस्त्रं सुरताम्बुचक्रं क्षीराज्यमांस लवणाजिनानि।
सोमाज्यलाक्षाश्च तिलान् फलानि एषां न विक्रीत कदन्नमाः
जीवन्ति नित्याद्युरसाम्बयामां कर्मोच कार्येऽपि च तन्तुवाः
राजा नृशंसो रजकःकृतघ्नो भोज्यश्च तेनैव च हिंसकाश्च॥
ये चैलधाराश्च सुराकृता ये शून्यं न वाचोत्त्वनृतं वदाश्च।
ये बन्दिनो येऽपिच याचकाश्च विप्रस्य चैतेऽपि न भोज्यशस्याः

मध्वाशनमधूच्छिष्ट दधिक्षीररसोदनः।
मनुष्यः फलपूजाच कुशवत् पुष्पवीरुधः॥
कोशेयकेशकुतपा नीरं विषं ररुस्तथा।
शाके कुशकपित्थःक गन्धतोषधिमूलकाः॥

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः।
तेषामन्नं न भोक्तव्यन्तथोपपत्तिवेश्मनः॥
यो वद्धस्य कदर्यस्य भुञ्जीतान्नं द्विजाधमः।
तद्भयानद्रवत्स्य स्यान्मृतो विट्शूकरो भवेत्॥
योऽन्नं वार्धुषिकस्यापि जातापत्यादिकस्य च।
अन्यस्यापि निषिद्धस्य सोऽनन्तं नरकं व्रजेत्॥
पाणिगृहीतभार्यायां सत्यां यस्तु नराधमः।
शूद्रीहस्तेन यो भुङ्क्ते पतितः स सदैव तु॥
त्यक्ता ये नोढभार्यास्तु त्यक्तः स पितृदैवतैः।
देवादित्यक्तः पापीयान् शूद्रादप्यधिकः स्मृतः॥
यः शूद्रीं भजते नित्यं शूद्री तु गृहमेधिनी।
वर्जितः पितृदेवैस्तु रौरवं यात्यसौ द्विजः॥
यः शूद्रायां स्वयं जातो ह्यस्य सोऽपि तत्पुनः।
अन्यस्याश्च पुनः सोऽपि किन्तस्य प्रेत्य चिन्तनम्॥
सर्वान् भुञ्जीत नरकान् त्रिंशतिं त्वेकवर्जितान्।
रौरवादीन् क्रमेणैव पापिष्ठो यावदन्तरम्॥
हेमन्तशिशिरत्वोश्च प्रोष्ठपद्या परस्य च।
पञ्चत्वपरपक्षेषु कार्या साग्निभिरष्टका॥
हेमन्तशिशिरे चैका एकैकाथ तथापरा।
प्रोष्ठपद्या द्विजातिस्त्वो ह्यष्टका इति केचन॥
दर्शश्च पौर्णमासश्च तथैवाग्रहयणाद्वयम्।
चतुर्मासीव्रतान्येव कार्याणि साग्निकैर्द्विजैः॥
अनूचानः व्रतं कुर्युः सदैव व्रतचारिणः।

अग्निहोत्ररता नित्यं मातापित्रादिपूजकाः ॥
प्रतिग्रहनिवृत्ताश्च जपहोमपरायणाः ।
वृत्तवन्तश्च ये विप्राः स्नातकास्ते प्रकीर्त्तिताः ॥
संक्रान्तिरर्कवारश्च व्यतीपातो युगादयः ।
शुभर्चदिनयोगाश्च कार्य्या साग्निभिरष्टका ॥
न शूद्राय भिक्षेत नैतत् कर्त्तव्यं कर्म च द्विजैः ।
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥
लब्धं यज्ञाय स विप्रो न दद्याद्यज्ञकर्मणि ।
स वायसोऽथ वा गृध्रः काकोवाथ प्रजायते ॥
शिलोञ्छवृत्तिर्विप्रस्य तथा चैकाह्निकाशनः ।
त्र्याहाह्निकाशनो वा स्यात् कुम्भीकुशलधान्यकः ॥
पूर्वं पूर्वतरः श्रेयानेषां सद्भिः प्रकीर्त्तितः ।
सोमपः स्यात्त्रिवर्षान्न तत्पूर्वकृतसमागतः ॥
सोमेष्टिं पशुयज्ञञ्च कुर्य्याच्च प्रतिवासरम् ।
इष्टिर्वैश्वानरी यातु कर्त्तुं तदसम्भवेत् ॥
सत्यामर्थस्य सम्पत्तौ न कुर्य्याद्धीनदक्षिणाम् ।
तत्कृतश्च भवेदर्थं प्राप्नुयात्पशुयोनिताम् ॥
श्रद्धापूतञ्च दातव्यं पात्रे दानं समर्चितम् ।
याचितोऽपि हि दातव्यं पूतं स्वश्रद्धया धनम् ॥
शूद्रान्नं ब्राह्मणोऽश्नन्वै मासं मासार्द्धमेव च ।
तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः ॥
आशूद्रस्यादशूद्रान्नो मृतश्चैवोपजायते ।
द्वादशं दश वाष्टौ च गृध्रशूकरपुष्कलः ॥

उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः।
जुह्वन्वापि जपन्वापि गतिमूर्द्ध्वां न विन्दति॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम्॥
तस्माच्छूद्रं न भिक्षेरन्यज्ञार्थं सद्द्विजातयः।
श्मशानमेव तच्छूद्रस्तस्मात्तं परिवर्जयेत्॥
कृषाणामथ वा भिक्षां कुर्य्यान्नेद्वृत्तिकर्षितः।
स शूद्राणां गृहे कुर्वन् न तत्पापेन लिप्यते॥
विशुद्धान्वयसञ्जातो निवृत्तो मांसमद्ययोः।
द्विजभक्तिर्वणिग्वृत्तिस्तच्छूद्रः संप्रकीर्तितः॥
उदक्यास्पृष्टसंस्पृष्टं वीक्षितं वाप्युदक्यया।
स्पृष्टं शकुनोत्सृष्टं प्रयत्नेन विवर्जयेत्॥
उच्छिष्टञ्च पदा स्पृष्टं शुक्तञ्च पतितेक्षितम्।
पर्य्युषितञ्च विट्कस्थं केशकीटाद्युपाहितम्।
पत्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत्॥
नाश्नीरन्नेतदशनं सामिषन्ते द्विजातयः।
शूद्राणामपि भोज्यान्नाः स्युर्दासनापितादयः॥
सस्नेहमशनंभोज्यं चिरस्थमपि यद्भवेत्।
अनुक्ता अपि भोज्याः स्युः सद्यश्वेता यवादयः॥
गर्भिण्या वत्ससुभयागवादेर्वर्जयेत्पयः।
स्त्रीणामेकशफोष्ट्रीणां तथारण्यकमाविकम्॥
प्रसूता ब्राह्मणी गौश्च महिष्याजा तथैव च।
दशरात्रेण शुद्ध्येत भूमिष्ठं च नवञ्जलम्॥

शाकादिकञ्च विट्जातं कवचानि च वर्जयेत् ।
मांसं कीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत् ॥
एवं ये कव्यमश्नन्ति तथा विष्ठाभुजश्च ये ।
शुकटिट्टिभदात्यूहान् कपोतपिकसारिकाः ॥
सेधाव्यान् पञ्च षट् पञ्च सिंहाद्यान्नखकांश्च षट्
धर्मशास्त्रोदितानश्यात् सर्वाकारांश्च वर्जयेत् ॥
भक्ष्यप्राणां त्यजेन् मांसं श्राद्धयज्ञोत्सवेष्वपि ।
कृत्वा च विधिवत् श्राद्धं नाद्यमतिथिनामिषम् ॥
यद्दैवाद्ययसम्पत्तिस्तद्दैवामन्त्रयेद्द्विजान् ।
कृत्वा च विधिवत् श्राद्धं पश्चात् तत् स्वयमश्नुयात्
नाद्यादविधिना मांसं मृत्युदिष्टेऽपि धर्मवित् ।
भक्षयन्नरके तिष्ठेत्पशुलोमसमाः समाः ।
गृहस्थोऽपि हि यो नाद्यात्पिशितन्तु कदाचन ॥
स साक्षान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः ।
न स्वयञ्च पशुं हन्याच्छ्राद्धादिक उपस्थिते ॥
क्रव्याद्यैः सारमेयाद्यैर्हतं मृगादिमाहरेत् ।
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः ॥
समर्थो यस्य यस्तु स्यादन्नं दत्त्वा तु देहिनाम् ।
सतामिति गिरातङ्को लोमहृष्टं निगद्यते ।
अन्नादेरपि भक्ष्यस्य स्नेहमद्यामिषस्य च ॥
महाफलानि हन्तौ स्यात् प्रवृत्तिः स्वर्गसाधना ।
एकोऽष्टशतमश्वेन यजेत पशुना द्विजः ।
अन्योन्यं मांसमश्नाति स्वर्गप्राप्तिस्तयोः समा ॥

क्षेम राजन् ! शङ्खकस्य ताम्रस्य वैणवस्य च ।
चर्मणोरज्जुवस्त्राणां शुद्धिर्जायेत वारिणा ॥
तदादिधमपात्राणां धान्यानां वायसामपि ।
अन्येषां मयरूपाणां प्रोक्षणाच्छुद्धिरिष्यते ॥
मार्जनाद्यज्ञपात्राणां हस्तेन यज्ञकर्मणि ।
चम्मोगे यत्र कैश्चण्ये: शुद्धेतां कौशिकाविकौ ॥
श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च ॥
शणमयानि पुनः पाकैः क्षौमाणि सितसर्षपैः ।
शुद्धेत कारुहस्तस्थं पण्यं यत् स्यात्प्रसादितम् ॥
भैक्षस्य प्रक्षोपणाच्छुद्धेत् पिष्टिः मात्राश्रयस्य तु ।
स्त्रीमुखस्य सदा शुद्धं भूमिर्लेपविवर्जिता ।
अपरा दहनाद्यैश्च गृहं मार्जनलेपनैः ॥
द्रवद्रव्याणि शुध्यन्ति वह्निना प्लावनेन च ।
क्रव्यादाद्यात् हृतं मांसं सर्वदा शुचि कीर्तितम् ॥
तृप्तिकृत् सौरभेयाश्च स्वभावात् सङ्गदा गतिः ।
वदन्ति सूरयो वारि पवित्रमिति सर्वदा ॥
गौर्वह्निश्च वनच्छाया जलमश्वो वसुन्धरा ।
विप्रुषो मक्षिकानाञ्च न दुष्यन्ति कदाचन ॥
शुचिः प्रस्थापने वत्सः अजाश्वौ मुखतस्तथा ।
न तु गौर्मुखतो मेध्या न कस्य मुखजा मलाः ॥
सोमभास्करयो भीभिः पथशुद्धिः प्रकीर्तिता ।
ओष्ठाधरौ श्मश्रुकरौ सक्लेदौ भोजनादनु ॥
न दुष्येच्छ्रवणः प्राह व.लहस्तौ स्त्रियोर्मुखम् ।
स्नात्वा पीत्वा च भुक्त्वा च सुप्त्वा तप्त्वा तथैव च ॥

गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु ।
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ।
पद्माश्मलोहफलककाष्ठ चर्ममाण्डस्य तोयैः ॥
स्वयमेव शौचात् पुंसां शिग्रास्सर्व्वानि निःसहायम् ।
न स्त्रीणाञ्च सदा शुद्धिर्विहिता च सतामपि ॥
नभसः पञ्चदश्यां तु पञ्चम्यां च तथापरे ।
नभसस्य चतुर्दश्या मुपाकर्म यथोदितम् ॥
तद्विदः केचिदिच्छन्ति नभसः श्रवणेन तु ।
हस्तेन वाथ पञ्चम्या मध्यायानां वदन्ति तत् ॥
यत्र शाखोपवीतः स्याद्ब्रह्मचारी द्विजोत्तमः ।
तत्शाखा विहितं तस्य उपाकर्मादि कीर्त्तने ॥
अतो वेदाधिकारत्वं वेदपाठस्य कीर्त्तने ।
अनुपाकृतविप्राद्यैर्वेदाध्ययन दुष्कृतम् ॥

मुञ्जोपवीताजिन दण्डकाष्ठम्
त्याज्यं न तत्स्याद्व्रतचारिणा मपि ।
अक्लिष्टमेकोहतलोपपापम्
संस्कारमन्यं न पुनर्नयेयुः ॥

ओषधीनां तु सद्भावे स्वशाखाविहितन्तु तत् ।
रोहिण्या च महस्यस्य उपाकर्माणि कुर्वते ॥
न भवेदनुपाकर्म ब्राह्मणः स्नातको व्रती ।
कर्मच्युतो भवेद्व्रात्यो व्रात्याभिष्कृतिकः शुचिः ॥
तथा तत्स्यादनध्यायो व्रतगुर्वादिषु त्र्यहम् ।
मित्रकादिष्वहोरात्र मधीत्यारण्यकः शुचिः ॥

अष्टकासु तथाष्टम्यां पौर्णमास्यां शशिक्षये ।
मन्वादौ युगपत्याद्ये बिन्दुपातात् क्षयेऽपि च ॥
चतुर्मासि द्वितीयायां चतुर्दश्यामहर्निशम् ।
अहोरात्रे नृपे संस्थे व्रतिनि श्रोत्रिये यतौ ।
अत्र त्र्यहमनध्याय मिच्छन्ति चापरे त्र्यहम् ॥
अशौचसूतकान्तं च यावच्छुद्धिस्तयोर्भवेत् ।
देशान्तरगते प्रेते सुतेऽपि स्यादहर्निशम् ॥
गुर्वादौ वा नृपत्यादौ इति वाशिष्ठजोऽब्रवीत् ।
प्रतिग्रही त्वहोरात्रं भुक्त्वा श्राद्धकमेव च ॥
तज्ज्ञा ब्रूयुरनध्याय मनुमन्त्वा वहर्निशम् ।
यस्यादौ च रहो भोक्ता रहोरात्रा विदुर्बुधाः ।
अकाले वा हते हस्तिवक्त्रिदा येच सप्तमाः ।
सामेषु दुःखितानाञ्च खरादीनाञ्च निःस्वने ॥
पतितश्वावशूद्रान्त्यसन्निधाने न कीर्त्तयेत् ।
आत्मन्येव शुचौ देशे विद्युत्स्तनितरोहिते ॥
वधे च कलहे देशविप्लवे लोकविग्रहे ।
पांशुवर्षेऽम्बुमध्ये च दिग्दाहग्रामदाहयोः ॥
नीहारे च भवेद्विद्वान् सन्ध्ययोरुभयोरपि ।
धावंश्च न पठेद्विद्वान् पूतिगन्धेतयैव च ।
विशिष्टे चागते गेहे गावाहक्निर्गमे तथा ॥
भोजनायोपविष्टस्य क्षुधितस्यार्द्रपाणिनः ।
वान्ते चान्ते तथा जीर्णे महापातेऽतिमारुते ॥
राजा हृषौ च यानादौ आरूढस्य तथा द्विजः ।
एतानन्यांश्च तत्कालान् अनध्यायान्विदुर्बुधाः ॥

यो वर्ज्जयेदनध्यायान्वेदाध्ययनतद्द्विजः ।
भवन्ति तस्य सफला वेदाः मोक्षफलप्रदाः ॥
येच तेषु पठन्त्यज्ञाः पाठलोभेन लोभिताः ।
न ग्राह्यता भवेद्विद्या निष्फला च तथा द्विजः ॥
यः पठेद्विधिवद्वेदान् तत्प्रतीन्द्रियसंयमी ।
ब्रह्मत्वमिह लोकेऽपि ऐश्वर्यसुखभाक् भवेत् ॥
जनानां स्पृश्यतां यत्र मार्गं गच्छन् पठेद्द्विजः ।
निष्फलास्तस्य वेदाश्च वेदविः वदोषभाक् ॥
यः पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ।
मङ्गीषग्राममध्ये तु संभवेत् वेदविक्रयी ॥
ये स्वाध्यायानधीयीरन् अनध्यायेषु लोभतः ।
वज्रकृपेण ते मन्त्रा स्तेषां देहे व्यवस्थिताः ॥
नाक्रामेद्मरादीनां छायां तथा परस्त्रियः ।
वान्तष्ठीवनविण्मूत्र कार्पासास्थिकपालिकाम् ॥
नानश्चेयाः स्युश्च विप्राङ्गरगान् स्पृशेय् द्विजाः ।
स्वियं कामं च मा काङ्क्षेन्नस्पृशेन्मर्म कस्यचित् ।
नित्यं वर्त्तेत चात्मस्थं धर्मञ्च नित्यमर्ज्जयेत् ॥
न किञ्चित्ताड़येद्धीमान् सुतं शिष्यञ्च ताड़येत् ।
ताड़येन्नाभितोऽधस्तात्स्तानन्यत्र ताड़येत् ॥
आचारेण सदा विद्वान् वर्त्तते यो यतेन्द्रियः ।
स ब्रह्म परमाप्नोति चारण्येऽमुत्र चेह च ॥
आचारमूलं श्रुतिशास्त्रतत्त्वं आचारमाग्नाय तदुक्तसत्य
आचारपर्णानि हि वाग्मिशीगोत् वाचारपुष्पानि यशोध
आचारवृक्षस्य फलं हि नाकस्तस्यास्य सुस्वादुरसश्च मुक्ति

तस्मादनन्तं फलदन्तु तत्त्वमाचारमेवाश्रय यत्नपूर्वम् ॥
ये धर्मशास्त्रे विहिताश्च केचिद्धर्मा द्विजाग्र्योरपि तेच सर्वे ।
यत्नेन कार्याः पितृदेवभक्तैः श्राद्धानि कार्याण्यथ तानि वक्ष्ये ॥
यत्नेन धर्मो गृहमेधिविप्रैः प्रीतेन वाचा वपुषा च कार्यः ।
आयुः प्रजा श्री र्भुवि पूजितत्वं तस्माल्लभन्ते दिवि देवभोगान् ॥
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां धर्मसंहितायां चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

अयुक्चन्द्रावचन्द्रे भच्छायाग्रहणसंक्रमे ।
व्यतीपातविष्वत् क्षणपक्षपातार्थलब्धिषु ॥
अष्टका नयने द्वे च श्राद्धं प्रति यदा रुचिः ।
पुण्यः श्राद्धस्य कालोऽयमृषिभिः परिकीर्तितः ॥
युगादिषु च कर्त्तव्यं मन्वन्तरादिकेऽपि च ।
श्राद्धकालोऽप्ययं प्रोक्तो मन्वाद्यैर्धर्मकर्तृभिः ॥
नवान्नं नवोदकञ्चैव नवछन्नं तथाऽष्टकम् ।
नाश्नन्ति येषु चेद्धन्ते पितरो हि यमालये ॥
काणः पौनर्भवो रोगी पिशुनो वृद्धिजीवकः ।
कृतघ्नो मत्सरी क्रूरो मित्रभुक् कुनखोऽगुदः ॥
विच्छिन्नजननश्वित्री श्यावदन्तावकीर्णिनः ।
हीनाङ्गचातिरिक्ताङ्गो विक्लवो परनिन्दकः ॥
क्लीवोऽभिशस्तवाक् दुष्टभृतकाध्यापकस्तथा ।
कन्यादूषी वणिग्वृत्तिर्विनग्नः सोमविक्रयी ॥

भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकः ।
पित्रादित्यागकृत्तेन वृषली पतितस्तु ॥
अनुक्रश्चित्तसम्बातः परिपूर्वापतिस्तथा ।
अजापालो माहिषिकः कर्मदुष्टाश्च निन्दिताः ॥
योऽसत्प्रतिग्रहग्राही यश्च नित्यं प्रतिग्रही ।
ग्रहसूचकदूतौ च पितृश्राद्धेषु वर्जिताः ॥
एकादशाहे भुञ्जन्त शूद्रान्नरससंयुताः ।
गुरुतल्पगो ब्रह्मघ्नो यस्य चोपपति गृहे ॥
प्रेतस्पृक् चैव निर्नक्ता चोपयाचकयाचकौ ।
वकुकाकविड़ालाश्च शूद्रवृत्तिश्च गर्हितः ॥
वाक्दुष्टबालदमको नित्यमप्रियवाक्यया ।
आसक्तो द्यूतकामादाववतिवाक् चैव दूषितः ॥
निराचाराश्च ये विप्राः पितृमातृविवर्जिताः ।
विद्वांसोऽपि हि नाभ्यर्च्याः पितृश्राद्धेषु सत्तमैः ॥
न वेदैः केवलैर्वापि तपसा केवलेन च ।
संवृत्तैः किन्तु तैः प्रोक्ताः पावता ब्राह्मणस्य च ॥
यत्र वेदास्तपो यत्र यत्र वृत्तं द्विजाग्रजे ।
पितृश्राद्धेषु तं यत्नान्नित्यशस्त्वर्चयेत् ॥
वेदशास्त्रार्थविच्छान्तः शुचिर्धर्ममनाः सदा ।
गायत्री ब्रह्मचिन्ताकृत् पितृश्राद्धे स पावनः ॥
रथन्तरं बृहज्ज्येष्ठः सामवित् त्रिमधुपर्णकः ।
त्रिमधुश्चापि यो विप्रः पितृश्राद्धेषु पूजितः ॥
मातामहश्च दौहित्रो भागिनेयोऽथ मातुलः ।
मातृस्वस्रेयश्च तथा तथा मातुलजोऽपि वा ॥

जामाता श्वशुरो बन्धुर्भार्या भ्राता च तत्सुतः।
सुहृच्चाथ सदाचारा ये ते श्राद्धेषु पावनाः॥
ऋत्विग्गुरुरुपाध्याय आचार्यः श्रोत्रियोऽपरः।
एते श्राद्धेषु वै पूज्याः ज्ञातिसम्बन्धिबान्धवाः॥
अग्निहोत्री च यो विप्र आवसथ्याग्निकोऽपि च।
पितृमातृपरावेतौ भोक्तारौ हव्यकव्ययोः॥
कृष्येकवृत्तिजीवी यो भोक्ता मात्रादिकेषु च।
षट्कर्मनिरतः पूज्यो हव्यकव्ये सदैव हि॥
ऋतवृत्तिः सदाचारो मातादिभक्तितत्परः।
शुचिः षट्कर्मयुक्तश्च हव्यकव्येषु पूजितः॥
युगानुरूपतो यस्तु विद्याचारादिसंयुतः।
स पूज्योऽनभियुक्तः स षट्कर्मनिरतो द्विजः॥
इत्युक्तगुणसम्पन्नान् ब्राह्मणान् पूर्ववासरे।
निमन्त्रयेत सद्भक्त्या नियोगस्थानपूर्वकम्॥
सव्येन देवतार्थन्तु पित्रार्थमपसव्यवान्।
ततस्तैः चरितव्यं स्यादुक्तं पितृरतद्विजैः॥
जितेन्द्रियैस्तु भाव्यं स्यादहोरात्रमतन्द्रितैः।
तस्मिन्नहनि वा प्रातः यत्र श्राद्धमवस्थितम्॥
निमन्त्रयेत तान् भक्त्या तैश्च भाव्यं जितेन्द्रियैः।
विप्रोऽपपार्श्वपृष्ठस्थाः पितृमातामहादयः॥
भुञ्जन्ति क्रमशः श्राद्धे तथा पिण्डाशिनोऽपि च।
निमन्त्रित द्विजं श्राद्धे न शयीत स्त्रिया सह॥
अध्वानं न च वै यायान्न ब्रूयादनृतन्तथा।
नाधीयीत दिवास्वापं न कुर्वीत न सम्वदेत्॥

न म्लेच्छपतितैः सार्द्धं न वदेद्वा निषिद्धकम् ।
प्राङ्मुखौ दैविकौ विप्रौ विप्राश्चय उदङ्मुखाः
एकैको वो भयत स्या इनम्पत्ताविति क्रमः ।
पात्रं वा दैविकं कृत्वा विप्र एकम् पैतृके ॥
इति वा निर्वपेत् श्राद्धं निर्धनश्चान्यदाचरेत् ।
गत्वारण्यमनावृष्य ऊर्द्धबाहुर्विरौत्यदः ॥
निरन्नो निर्धनो देवाः पितरो ह्यानृणश्च रु ।
न मेऽस्ति वित्तं न गृहं न भार्या
श्राद्धं कर्म वः पितरः ! करोमि ।
वने प्रविश्येह कृतं मयोच्चै-
र्भुजाद्वये वर्त्मनि मारुतस्य ॥
श्राद्धार्थमेतद्भवतां प्रदत्तम्
मन्त्रं दयध्वं पितृदेवताभ्यः ।
अस्या वचोऽस्मिन्न भुजावतस्तात्
दिवाच रात्रिं समुपोष्य तिष्ठेत् ॥
भवेन्न चैतेन कृतेन तेषा
मृणं न मुक्तः पितृदेवतानाम् ।
निर्वित्तनिर्भाग्य निराश्रयाणाम्
अ.स्यं मार्गः प्रथितो मुनीन्द्रैः ॥
ख्यातं मया वदित्वा वः पितरः श्राद्धदेवताः ।
श्राद्धार्थंश्च विमुक्तोऽहं भवतः पितरो मया ॥
कृतोपवासः स तस्मात् श्राद्धर्णाद्विप्रमुच्यते ।
एतच्चापि न यः कुर्यात् पितरस्तेन वै हतान् ॥
सम्पत्तावथ पात्राणामेकैकस्य नयस्त्रयः ।

पित्रादौ ब्राह्मणाः प्रोक्ता श्चत्वारो वैश्वदेविके ॥
द्वौ वापि दैविके विप्रौ चैकैकोवा न दोषभाक्।
स्यान्मातामहिकेऽप्येवमेकोऽपि वैश्वदेविके ॥
नतु वैक्रतु सर्वेषां माश्वलायनमतः स्थितम्।
पितृणामर्चयेद्विप्रो मन्त्रपिण्डनिदर्शनम् ॥
न मातामहिकं श्राद्धं श्रोतुमुक्तन्तु साग्निके।
अनग्निकस्य तत् कुर्य्यादिति केचिन्मतं विदुः ॥
साग्निकस्यापि कार्यं स्यात् श्राद्धं मातामहं द्विजैः।
षट् दैवत्यमितीत्येकेऽप्येकेन पार्वणाद्वयम् ॥
अपुत्रस्य पितृव्यस्य तत्पुत्रैर्भ्रातृजो भवेत्।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाः ॥
पार्वणन्तेन कार्य्यंस्यात् पुत्रवत् भ्रातृजेन तु।
पितृस्थाने तु तं कृत्वा शेषे पूर्ववदुच्चरेत् ॥
श्राद्धं पत्न्यापि कार्यं स्यात् अपुत्रा यास्तु योषितः।
तस्यापि हि तया कार्यमेकत्वं हि तयोर्यतः ॥
भ्रातुर्ज्येष्ठस्य कुर्वीत कार्यं ज्येष्ठोऽनुजस्य च।
देवहीनस्तु तत् कुर्यात् इति धर्मविदो विदुः ॥
पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।
पुत्राभावेतु पत्नीच तदभावे सहोदरः ॥
पित्रादीनान्तु कर्त्तव्यं समीजस्ते यतस्त्वमी।
नावश्येयास्तु ते सर्वे कृते तु स्यान्महत् फलम् ॥
पितामहस्य चाप्येवा यस्य जीवन्पिता द्विजः।
प्रत्यक्षासोऽपि वै पूज्याः संस्थित्यर्थं यतश्च तत् ॥
विद्यमानस्ययाथां स्यात् प्रत्यक्षः पूज्य एव सः।

गौतमस्य मतं ह्येतदिति वाशिष्ठजोऽब्रवीत् ॥
विद्यमाने तु पितरि श्राद्धं कर्त्तुमुपस्थितः ।
पितृवत्पितृपित्रादेः कुर्य्याच्छ्राद्धमसंशयम् ॥
पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः ।
तत्पितुर्निर्वपत्यस्मात् तृतीयं तु पितुः पितुः ॥
अतएव द्विजः पुत्रीमुद्वहेन्न कथञ्चन ।
उद्वोढुः पुत्रः पुत्रोऽसौ पुत्रोऽसौ मातुरेव हि ॥
पुत्रश्च दुहितुश्चैव समौ तौ धार्मिकौ पथि ।
अर्थकृतौ च विप्रोक्तौ तुल्यौ तौ शक्तजोऽब्रवीत् ॥
मुख्यं यथा पितुः श्राद्धन्तथा मातामहस्य च ।
पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥
दौहित्रः पार्वणश्राद्धे कालस्तु कुतपस्तथा ।
तथा कृष्णास्तिला विद्वान् इति शास्त्रविदो विदुः
काम्यमभ्युदयश्चैव द्विविधं पार्वणं स्मृतम् ।
तथाकामन्तु काम्यं स्याद् वृद्धावभ्युदये स्मृतः ॥
क्षत्रियायान्तु यो जातो वैश्यायान्तु तथा सुतः ।
ब्राह्मणस्य पितुस्तौ तु निर्वपेतां द्विजाग्र्यवत् ॥
क्षत्रियस्य सुतश्चैव तथा वैश्यसुतोऽपि च ।
स्वतानेन द्विजांस्तर्प्य श्राद्धद्वयस्य निर्वपेत् ॥
आमान्नेन तु शूद्रस्य कुर्यात्तु द्विजपूजनम् ।
कृत्वा श्राद्धन्तु निर्वर्त्य सजातीनाशयेत्तथा ॥
यः शूद्रो भोजयेद्विप्रान् स्वतपाकाशनेन तु ।
सहाद्विप्रकृतं ताभिर्लिप्यते स कुजोऽब्रवीत् ॥
शूद्रपाकं द्विजेभ्यश्च विभवान्वो ददाति यः ।

क्रमीभवति पाताले स युगानेकविंशतिः॥
भोजितेन तु विप्रेण यत्पापं तस्य जायते।
तेनासौ लिप्यते मूढो यः शूद्रो भोजयेद्द्विजान्॥
योऽश्नं मन्ये द्विजाभ्यास्तु शूद्राहृतेन भोजयेत्।
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभाम्॥
यत्किञ्चिद्दुष्कृतं विप्रे पूर्वं कृतन्तु तिष्ठति।
तेनासौ लिप्यते पापी यः शूद्रो भोजयेद्द्विजान्।
शूद्रोच्छिष्टन्तु यो भुङ्क्ते मन्ये विप्रोऽधमः स तु॥
कृमित्वं याति विष्ठायां युगानि ह्येकविंशतिः।
शूद्रोच्छिष्टन्तु भुञ्जानः पश्चाद्दानि द्विजोत्तमः॥
स तद्विष्ठाकृमित्वं हि प्राप्नोति हि शतं समाः।
अतो न भोजयेद्विप्रान्निर्वपेन्नैव पूजयेत्॥
शूद्रान्नं भोजनाद्युक्तं इति पाराशरोऽब्रवीत्।
अग्नौकरणपिण्डाश्च कुर्यादामाशनेन तु॥
इतिदैर्दधिमध्वाज्यैः सम्पृक्तः शक्तुकैरपि।
यवाद्यसंस्कृतान्नेन होमापि चरु निर्वपेत्॥
जलेन पयसा वापि नखादश्नाद्धकृत्तथा।
नामान्नेन द्विजैः कार्यं कदाचिदपि सद्द्विजैः॥
अर्पयित्वा द्विजो कस्तु तथापि पाकमाश्रयेत्।
न कुर्य्यात् परपाकेन नैकपाकेन तु द्वयम्॥
नैकश्राद्धे द्वय कुर्यान्नच कुर्यात् परान्नभुक्।
पित्रादीनां सगोत्रा ये तथा मातामहस्य च॥
तेषामेकेन पाकेन कार्यं पिण्डविवर्जितम्।
केचित् सपिण्डमिच्छन्ति समगोत्रस्तथा तथा॥

पिता मातामहश्चैव स्यात्त्रिजन्मीयतथा तथा ।
पृथक् कर्तुमशक्यं स्याद्दर्थपात्राद्यसम्भवे ॥
अवश्यन्तत्र कर्तव्यमेकादेकमपाश्रयेत् ।
येषां नोढाहसंस्कारो ह्यन्यसंस्कारसंस्कृताः ॥
सङ्कल्पितं भवेत्तेषां श्राद्धं कार्य्यं च तेऽहनि ।
केचित्तु पिण्डमिच्छन्ति ब्राह्मं संस्कारवत्तथा ॥
आद्यो हि ब्राह्मसंस्कारस्तस्मात् पिण्डान् प्रदीयते ।
सर्वेष्वपि निमित्तेषु कर्तव्यं पिण्डसंयुतम् ॥
पितॄणां त्रिविधा यस्माद्गतिः प्रोक्ता मुनीश्वरैः ।
वैश्वदेवः सदा कार्य्यो श्राद्धे च समुपस्थिते ॥
पाकशुद्ध्यर्थमेवैतत् पूर्वमेतद्विधीयते ।
वैश्वदेवोऽग्रतश्चैव श्राद्धकाले विशेषतः ॥
पाकशुद्धिस्तु विज्ञेया भुक्तोच्छिष्टं तु वर्जयेत् ।
संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ॥
अग्रतो वैश्वदेवं हि पश्चादेकादशेऽहनि ।
एकोद्दिष्टविशेषेण प्रागेव ह्यग्निपूजनम् ॥
कालस्तु कुतपस्तस्य रौहिणः पार्वणस्य च ।
वामतश्चासनन्दद्यात् पितृकार्य्येषु सत्तमः ॥
दैविके दक्षिणन्तद्वदिति पाराशरोऽब्रवीत् ।
आसने चासनन्दद्याद्वामे वा दक्षिणेऽपि वा ॥
पितृकार्येषु वामन्तु दैवे कर्मणि दक्षिणम् ।
पितृश्राद्धेषु यो दद्याद्दक्षिणं दर्भमासनम् ॥
नाश्नन्ति पितरस्तस्य नाध्यानि वत्सराणि षट् ।
तस्माद्वामतो वा पात्रे पितृकर्मणि चासनम् ॥

दैविके दक्षिणा तद्वदिति वाशिष्ठजोऽब्रवीत्।
कुत्र कालेच कर्त्तव्यं श्राद्धन्तत् पैतृकं प्रभो!॥
वदस्व निश्चयन्तत्र विवदन्त्यपरेऽत्र तु।
पञ्चदशमुहूर्त्ताहस्तत्पागह्नं दिनं स्मृतम्॥
अपराह्णं स्मृता राचि सम्मध्यः कुतपोमतः।
यथा यथा च ह्रस्वत्वं पुंमः स्यानेनसो भवेत्॥
तथा तथा पवित्रं स्यात्कालः श्राद्धार्चनादिषु।
च्छायेयं पुरुषस्यैनस्तस्यादाधो भवेदधः॥
आधानश्राद्धदानादेः स कालोऽक्षयकृत् स्मृतः।
अयुतं तु मुहूर्त्तानामह्नं ह्यष्टदशाधिकम्॥
त्रिंशद्भिस्तै रहोरात्रमिति माध्यन्दिनी श्रुतिः।
दिवसस्याष्टमे भागे मन्दीभवति भास्करे॥
स कालः कुतपो ज्ञेयस्तत्र दत्तन्तु चाक्षयम्।
मध्याह्ने तु गते सूर्य्ये न पूर्व्वे नच पश्चिमे॥
तुल्याग्रसंस्थिते चैव सोऽष्टमो भाग उच्यते।
मध्याह्नाच्चलितो भानुः किञ्चिन्मन्दगतिर्भवेत्॥
स कालो रौहिणो नाम पितृणां दत्तमक्षयम्।
तस्मात् सर्वप्रयत्नेन रौहिणन्तु न लङ्घयेत्॥
अकाले विधिना दत्तं न दैवपितृगामि तत्।
अष्टवृद्धि भवेद्यत्र तत्राब्दमुभयात्मकम्॥
श्राद्धन्तत्र च कुर्वीत मासयो रुभयोरपि।
पिण्डवर्ज्य मसंक्रान्ते संक्रान्ते पिण्डसयुतम्॥
षष्टिभिर्दिवसैर्मास स्त्रिंशद्भिः पक्ष उच्यते।
संक्रान्तिरहितः पक्ष स्तत्र कार्यं त्रिपिण्डकम्॥

सिनीवालीमतिक्रम्य यदा संक्रमते रविः।
युक्तसाधारणैर्मासैः स काल उत्तरोभवेत् ॥
संक्रान्तिवर्जितः काल समलः पापसम्भवः।
रवसात्भागधेयोऽसौ उत्सवादिविवर्जितः ॥
तत्र नैमित्तिकं कार्य्यं श्राद्धं पिण्डविवर्जितम्।
नित्यं तु सततं कार्य्य मिति पाराशरोऽब्रवीत् ॥
अहोभिर्गणितैर्यत् स्यात् तत्कार्यं यत्र सर्व्वदा।
तिथिनक्षत्रयोगञ्च जातकर्मादिकाश्च ये ॥
नैमित्तिकाश्च दैवाद्ये कार्य्यास्तेऽपि मलिम्लुचे।
तीर्थस्नानं गजच्छायां द्विमुखीं गोप्रदानवत् ॥
मलिम्लुचेऽपि कर्त्तव्यं सपिण्डीकरणन्तथा।
आग्रहणं ममावास्या मष्टकाग्रहसंक्रमम् ॥
अधिमासेऽपि कार्य्यं स्यादिति पाराशरो ऽब्रवीत्।
नित्यञ्च नित्यशः कार्यमिष्टकामांश्च वर्जयेत् ॥
वार्षिकं पिण्डवर्ज्जं स्यादन्यस्मिन् पिण्डसंयुतम्।
दृष्टिरायहणं श्राद्ध मन्वाद्यार्यञ्च सर्वदा ॥
कर्त्तव्यं सततं विप्रैरिष्टिकामांश्च वर्जयेत्।
दैवे कर्मणि संप्राप्ते तिथौ यथोदितो रविः ॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥
वृद्धिमह्निवसे कार्यं श्राद्धमाभ्युदिकं द्विजः।
क्षीणमानदिने कार्यं श्राद्धं विद्वान्! क्षयादिकम् ॥
मित्रे चैव सगोत्रे च पितृमातृसहोदरे।
आसनञ्चैव दातव्यं भोक्तव्या एवमेव ते ॥
ब्राह्मणं न सगोत्रन्तु पूजयेत् पितृकर्मणि।

नोपतिष्ठन्ति तच्छ्राद्धं किन्तु स्यान्नु निराशता ॥
सगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः ।
हतास्तु पितरस्तेन न भुक्तमुपतिष्ठति ॥
श्राद्धं कुर्वन् द्विजोऽज्ञानात् सगोत्रं यस्तु भोजयेत् ।
स लुप्तपितृदेवः सन्नरकं प्रतिपद्यते ॥
तस्माद्वै गोत्रिणं विप्रं भोजयेद्विधिपूर्वकम् ।
ज्ञातिमात्रो न भोज्यस्तु उच्छ्रितैस्तु द्विजोत्तमैः ॥
दक्षिणाप्रवणे देशे श्राद्धं कुर्यात्तु पैतृकम् ।
पितॄणां पावनो देशः स प्रोक्तोऽक्षयतृप्तिदः ॥
देशे काले च पात्रे च विधिना हविषा च यत् ।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ॥
तैजसानि तु पात्राणि ह्यर्घ्याय भोजनाय च ।
स्वल्पानापि यथान्येके अपराण्यपरे विदुः ॥
पलाशपद्मपत्राणि अनिषिद्धानि यानि च ।
तानि श्राद्धेषु कार्याणि पितृदेवहितानि च ॥
दृष्टिश्राद्धेषु मन्यन्ते मृण्मयानि तु केन च ।
शौनकस्य मतं ह्येतत् हयाकार्यन्तु मृण्मयम् ॥
एकद्रव्याणि कार्याणि पात्राणि भोजनार्घ्ययोः ।
त्रीणि पैतृककार्याणि भेदमेकत्र वर्जयेत् ॥
एकस्य वैश्वदेवानि पैतृकाण्येकवस्तुनः ।
इतिवा तानि कार्याणि भेदमेकत्र वर्जयेत् ॥
वटाश्वत्थार्कपत्रेषु न भुञ्जीत कदाचन ।
न जातिकुसुमैर्विद्वान् बिल्वपत्रैश्च नार्चयेत् ॥
सुरभीनागपर्णाद्यैः करवीरैश्च नारकैः ।

बिल्वपत्रैर्दर्भैर्येद्विद्वन् पितृश्राद्धेषु गर्हितैः॥
तन्दुलानैः कृतः श्राद्धं निराशैः पितृभिर्गतैः।
सर्वाण्यपि च पुष्पाणि निषिद्धान्यपराणि तु॥
वर्जयेत् पितृश्राद्धेषु केतकीकुसुमानि च।
गोरक्षाभङ्गराजाद्यैः मल्लिकाकुब्जकैरपि॥
समर्चयेत् द्विजान् श्राद्धे वर्ण्यपाण्योर्हिते द्विजः।
न दद्याद्गुग्गुलं श्राद्धे द्विजानां पितृदैवते॥
धूपाभावे तु कर्तव्यं घृतधूपं द्विजोत्तमः।
कुङ्कुमाद्यं चन्दनञ्च देयं गन्धविमिश्रितम्॥
ऊर्द्धञ्च तिलकं कुर्यान्न कुर्याच्च त्रिपुण्ड्रकम्।
ऊर्द्धञ्च तिलकं कुर्याद्दैवे पित्रे च कर्मणि॥
निराशाः पितरो यान्ति यस्तु कुर्य्यात् त्रिपुण्ड्रकम्।
पवित्रं यदि वा दर्भं करे कृत्वा द्विजान्तरः॥
समालभेत् द्विजानञ्च तत् श्राद्धं ससुरं भवेत्।
गन्धाश्च विविधा देयाः कर्पूरागुरुमिश्रिताः॥
शक्त्या वस्त्राणि देयानि तदभावे च निष्क्रयम्।
दीपश्च सर्पिषा देयः तिलतैलेन वा पुनः॥
न कान्यतैलैरन्यैस्तु कदाचित् सार्षपादिभिः।
देशधर्मं समाश्रित्य वंशधर्मं तथापरे॥
सूरयः श्राद्धमिच्छन्ति पार्वणाद्य चयान्यपि।
स्त्रीणामपि पृथक् श्राद्धं न मन्यन्ते स्वधर्मतः॥
मातामहस्वगोत्रेण मातुले तु सपिण्डताम्।
मातामह्यानहेच्छन्ति मातुलेऽपि सपिण्डताम्॥
स्त्रीणां स्त्रीगोत्रसम्बन्धात् पुंगोत्रेण नृणां यतः।

सपिण्डीकरणं काले श्राद्धद्वयमुपस्थितम्॥
देवाद्यं प्रथमं कुर्यात् पितॄणां तदनन्तरम्।
देवाद्यं पार्वणं प्रोक्तं प्रेतश्राद्ध मथापरम्॥
एकतच्च ततः पश्चात् कृत्वा विप्रांश्च भोजयेत्।
पितॄणा मर्घ्यपात्राणि प्रेतपात्र मथापरम्॥
प्रेतपात्रन्तु तत् कृत्वा पितृपात्रेषु योजयेत्।
ये समाना इति द्वाभ्यां पूर्ववच्छेष माचरेत्॥
सपिण्डीकरणं यस्य कृतं न स्याद्विजन्मनः।
श्राद्धेयं तस्य देयं स्यात् पिण्डमेकं तु निर्वपेत्॥
सपिण्डीकरणाद्र्ध्वं तत् क्रियाश्चैव यथाक्रिकम्।
एकादशाह्निकं कृत्वा यांहि मासि च मासिके॥
वर्षे वर्षे च कर्त्तव्यं मृतेऽहनिच तत् पुनः।
नापुत्त्रस्य सपिण्डत्वं केचिदिच्छन्ति तद्विदः॥
विशेषतोऽनपत्यस्य सत्यप्यत्राधिकारिणी।
विद्यमानः पिता दस्य स चेद्यदि विपद्यते॥
तदन्तरा सपिण्डत्वं वदन्ति श्राद्धवादिनः।
आभ्युदयिकसम्पत्तौ सर्वा प्रागेव कारयेत्॥
कुर्यात् परिजनेनैतत् स्वयं वापि द्विजोत्तमः॥
संन्यसन् सर्वकर्माणि तत् श्राद्धाय च तद्दिने।
अग्निदाह्यदिनश्चैके केचिन्मृतदिनं विदुः॥
विदेशस्थे मृताहस्तु शुक्लेवासि तु द्वादशी।
संग्रामे संस्थितानाञ्च प्रेतपक्षे शशिक्षये॥
अग्निसर्पादि मृत्यूनां षण्मासोपरि सत्क्रिया।
तेषां पार्वण मेवोक्तं यथाहेऽपि च सत्तमैः॥

चन्द्रार्चया नाशक संयुगेषु यः प्रेतपक्षे मृतवत्सदण्डः ।
सपिण्डतानन्तर माब्दिकाना भवन्ति तेषा मिह पार्वणानि ॥
क्षयाह्निकादि कार्याणि ब्रूयुर्धर्मविदो जनाः ।
अब्दादूर्ध्वं स्वरस्थे के कृत्वा च वैष्णवीं बलीम् ॥
विष्ण्वर्चनं विना नार्वाक् प्रदत्तमुपतिष्ठति ।
विद्युता हस्तपातेन अश्वेन मक्षिकेण वा ॥
इत्यादिकेन मृत्युः स्यात् यत्र तिथौ च तत्र च ।
तन्निमित्तस्य शुद्ध्यर्थं मासि मासि क्षयाह्निकम् ॥
कर्त्तव्यमवधौ यावत् ततः कुर्वीत सत्क्रियाम् ।
अनाशक हतानाञ्च क्षयाहेऽपि च पार्वणम् ।
मन्वासवष्ठि मन्यन्ते केचि दितु रवैदिकम् ॥
एकोद्दिष्ट मदैवं स्यादेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौ करणं हीनं तदपसव्यवत् ॥
पूर्वोत्तर प्लवे देशे श्राद्धं स्यान्मातृ पूर्वकम् ।
शतपीतादिपिष्टेन चर्चिते भूतले च तत् ॥
उद्दिष्टक्रतुकालस्य तत् प्रागेव विधीयते ।
आभ्युदयिक दैवानि पूर्वाह्णे स्यु रिति स्मृतिः ॥
तिलाक्षतोदकै र्युक्ताः न्यासनादिप्रदक्षिणम् ।
परि इत्यादि दृष्टेन कृत्वा च शान्तिपूर्वकम् ॥
व्रीहयो यवगोधूमाः अयताश्चाक्षताः स्मृताः ।
अक्षतामलकैः पिण्डान् दधिकर्कन्धु मिश्रितैः ॥
नान्दीमुखेभ्यो देवेभ्योः प्रदक्षिणा कुशासनम् ।
पितृभ्य सम्मुखेभ्यश्च प्रदक्षिणा मिति स्मृतिः ॥
कर्कन्धुभि र्यवैः पुष्पैः शमीपत्रै स्तिलैस्तथा ।

तेभ्योऽर्घ्यः प्रदातव्यः पितृभ्यो दैवतैः सह।
मातामहानामप्येवं षट् दैवत्यं श्रियेद् द्विजः॥
माङ्गल्यपूर्वकं सर्वं गन्धाद्यपि च धारयेत्।
दर्भिमन्त् पितृमातॄणां धूपो देयश्च गुग्गुलः॥
घृताभिघार धूपो वा यथा स्यात् परिपूर्णता।
दीपाश्च बहवो देयाः विप्रं प्रति घृतेन च॥
तैलेन केन ये वापि नवनीतेन चैव हि।
मालत्या शत पत्रा वा मल्लिका कुन्दयो रपि।
केतक्या पाटलायावा देया श्राद्धे न लोहिताः॥
वासांसि च यथाशक्त्या दद्यात्तेभ्योऽथ निश्चयम्।
परिपूर्णं तथा नत्स्यात्तथाकार्य्यं भवेदिति॥
सुवेष भूषणैः स्वसालङ्कारै स्तथान्तरैः।
कुङ्कमाद्यनुलिप्ताङ्गै र्भोव्यन्तु ब्राह्मणैः सह॥
स्त्रियोऽपित्तु तथा भूता गीतनृत्यादिहर्षिताः।
दुन्दुभीनादहृष्टाङ्गा मङ्गलध्वनिकारिकाः॥
सोमसदोऽग्निस्वात्ताश्च तथा बर्हिषदोऽपि च।
सोमपाश्च तथा विद्वंसथैव च हविर्भुजः॥
आज्यपाश्च तथा बल्स तथा परे सुकालिनः।
एते चान्ये च पितरः पूज्या सर्वे द्विजाग्रजैः॥
वसवश्च तथा रुद्रा स्तथैवादितिसूनवः।
देवता अपि यज्ञेषु स्वायम्भुवादि कीर्तिताः॥
एते च पितरो दिव्या स्तथा वैवस्वतादयः।
तत्पौत्राः प्रपौत्राश्च असंख्याः पितरः स्मृताः॥
एते श्राद्धेषु सम्पूज्या सु जिताद्यै र्द्विजातिभिः।

सन्तर्पिता इमे सर्वान् प्रीणयन्ति हयां पितॄन् ॥
प्राक् सङ्कल्पितान्वि ान् स्नातान् काले समागतान्।
दत्त्वार्घ्यान् कृतवत् शौचान् आचान्तानुपवेशयेत् ॥
ये स्पृशन्त्यत्र सत्येऽङ्घ्रि चाचमन्ति पिबन्ति च।
तेषाञ्च जायते शुद्धिराचमन्त्यस्रजाद्धि ते।
सर्वाणि खानि कार्याणि कार्यच्छिद्राणि चात्मनः ॥
तैराचान्तैर्भवेच्छुद्धिरशुचित्वन्यथा भवेत्।
व्याहृत्य वैष्णवान् मन्त्रान् स्मृत्वा च सर्वमातरम् ॥
शान्तस्वान्तौ द्विजान् पृष्टे करिष्ये श्राद्धमित्यथ।
करवै करवाणीति पृष्टा ब्रूयु र्द्विजास्ततः ॥
अनुज्ञायै वचो ह्येतत् कुरुष्व यत् कृतं कुरु।
ततो दर्भासनं कृत्वा देवेभ्यः समयं पुनः ॥
दक्षिणं जानुमन्वास्य दक्षिणाग्र तथासनम्।
पात्रद्वय मतोऽर्घ्यार्थं तैजसञ्चैकवस्तुजम् ॥
आसनं सपवित्रं तत् समभ्यर्च्य विधानतः।
प्राङ्मुखोऽमरतीर्थेषु शन्नोदेव्योदकं चयेत् ॥
यवोऽसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम्।

यवोऽसि पुण्यमिति संश्रितोऽसि
सम सधान्य प्रभुरस्यमुत्र।
सदनृमनुष्य पितृगणस्य तृप्तै
क्षितावतीर्णोऽसि हितोऽसि पुंसाम् ॥
उत्पादपूर्वञ्च मिमानयत्नेन वेधा
भूयः प्रसन्न मनसा तदुपासितः सन्।

चिक्षेप तान् सलिलमाथ प्रसिच्यताभि-
तेनावृता वरुणा दैवतका बभूवुः॥
आनीयमाम्बिधिरिमाम्बरुणस्य लोकान्
समप्रभूनभूवि ययान् वसुलोक तृप्तैः।
तत्पिण्ड पङ्क्तिविधा पितृदेवतानाम्
तृप्ता वसन्ति दिवि दानवराक्षएव॥

ततः सव्यं करं न्यस्ता विप्रो दक्षिणजानुभिः।
देवानावाहयिष्येत मिति वाच मुदीरयेत्॥
आवाहये त्यनुज्ञा च विश्वे देवाः स आगतः।
विश्वे देवा शृणुतेममिति मन्त्रद्वयं पठेत्।
सोमिन सहराज्ञेति केचित्पठन्त्यदोऽपि च॥
व्याहृत्य मन्त्रमावाह्य हस्ते दत्त्वा पवित्रकम्॥
अर्चयेत्तं द्विजं पुष्पैः दद्यादर्घं करे पुनः।
विश्वेभ्य स्त्वेव देवेभ्यस्तुभ्य मर्घ्यं प्रदीयते॥
या दिव्या इति मन्त्रेण पाणौ विप्रस्य तं क्षिपेत्।
अपसव्य मतः कृत्वा निर्वर्त्य वैश्वदैवकम्॥
आपो भूमिगताः केचिदादित्येत्यभिमन्त्र्यच।
पुनस्ताभिकयाभ्यास कुर्वन्ति मुखमार्जनम्॥
उदकं गन्धधूपांश्च वासांसि चन्दनं स्रजः।
दत्त्वा आपः च लोहूता दद्यात् पितृ कुशासनम्।
सोदकान् द्विगुणीभूतान् सतिलान् सकुशानपि॥
गोकर्णमात्रकान् साग्रान् प्रदद्याद्वामपार्श्वतः।
चतुर्थ्यन्तं सगोत्रञ्च पितृनाम च शर्मवत्॥
उच्चार्य परयोस्त्विदं तुभ्यं कुशासनम्।

पितॄणामर्घ्यपात्राणि संपूज्य दक्षिणामुखः॥
तिलोऽसीत्येतदुच्चार्य यवस्थाने तिलान् क्षिपेत्।
भूलग्नः सव्यजानुः सन् पितृतीर्थे नयाम्बरः।
पितृध्यानमना: कुर्यात् पितृकार्य्यमशेषतः॥
आवाहयिष्ये पित्रादीन् अनुज्ञावाहयेति च।
उशन्तः त्वेति चर्चीयं यथायन्तु न इत्यपि॥
अन्ये त्वपहता असुरा इत्यादि च पठन्ति हि।
अन्यविघ्नव्यपोहार्थं वक्तव्यमिति केचन॥
प्राच्य हिमार्चनं कार्यं प्राच्य दर्भ्यग्रसेवनम्।
प्राच्य मन्त्रं समुच्चार्य्य प्राच्य च मुखमार्जनम्॥
एते तिलास्तु विधिना ग्रथिलोकतल्
प्राक्कृत्य भोजन हिते न शुभाय धन्यः।
क्षिप्ता मलानि पुरुषस्य च तर्पणाद्यै
ये सन्ति तेषु भुवि सत्सु कुतो भयं स्यात्॥
तिलोऽसि चन्द्रामृतदैवतोऽसि
हितोऽस्यशेषे पितृदेवतानाम्।
कर्त्तापि तृप्तिं परमां पितॄणां
मुक्तोऽसिते न भवता विधिसम्भवोऽसि॥
अर्घ्यपात्राणि सर्वाणि कृत्वा तान् पाद्यपात्रके।
पितृभ्यः स्थानमसीतिन्युब्जं कुर्य्यादधश्च तत्॥
यस्तूद्धरेदविज्ञाना दर्घ्यपात्रन्तु पैतृकम्।
तद्धि श्राद्धमभोज्यं स्यात् क्रुद्धैः पितृगणैर्गतैः॥
आश्रित्य प्रथमं पात्रं तिष्ठन्ति पितरो नृणाम्।
श्राद्धे तस्मान्न तं हित्वानुद्धरेत् प्रथमं सुधीः।

वाचयेत् परिपूर्णन्तु वामोदव्वा विधानतः।
अस्त्वेतु परिपूर्णन्तु ब्रूयुरेते द्विजातयः॥
ससर्पिः पात्र माहाय सविधानं विधानतः।
नत्वा सर्वान् द्विजान् पृच्छेत्करिष्येऽग्नाविति द्विजः॥
कुरुष्वेति त्वनुज्ञाता जुहोत्यग्नौ ततः पुनः।
भोजने पितृविप्राणा मितिमन्त्र मुदीरयेत्॥
अग्निशब्दं चतुर्थ्येकवचनान्तं समुच्चरेत्।
कव्यवाहनशब्दं च सोमं पितृमदित्यपि॥
पङ्क्तिमूर्द्धान मेवात्र पृच्छेदितिह केचन।
पितृश्राद्धप्रदानत्वात् साग्नस्वे नाथवा पुनः॥
तृतीयां मनसा दद्यात् यमाय त्वेतवा पुनः।
तुष्णीं यत्र तु होमादौ प्रजापतिस्तु तत्रतु॥
अहं वाक् तस्मिन् वाक् सम्वादो भूम्नोगिरः।
अहत्यवाच्यते वाणी समुच्चाग्नेः प्रजापतेः॥
अग्नावाहुतयः प्रोक्तास्तिस्रएव मनीषिभिः।
अग्निवह्निप्रपात्रेषु पश्चात्तज्जुहुयाद् द्विजः॥
अग्नौकरण शेषन्तु पितृपात्रेषु दापयेत्।
प्रतिपाद्य पितृणां तु दद्याद्वै वैश्वदेविके॥
यश्चाग्नौकरणं दद्यात् पितृविप्रकरेषु च।
तमोच्छेपित मेतत् स्वात्ममाप्तिस्तावतैव तु॥
पितरः कव्यवन्तश्च वह्निवन्तश्च देवताः।
अतः पाणौ न तद्देयं देयं पात्रे कुशान्विते।
वैश्वदेविकविप्राणां पात्रे वा यदिवा करे॥
अनग्निकस्तु तद्दद्यात् प्रथमं वैश्व दैविके।

कृतशेषमशेषाणां पात्रे दद्याद् द्विजोत्तमः ।
पृच्छेत्सर्वांश्च यत् कृत्यं सामान्येन द्विजोत्तमान् ॥
दत्त्वान्ये करणश्चान्यं विप्राणां तृप्तिकृद्धविः ।
परिवेष्य मिति ब्रूयु स्ततोविधिरनन्तरः ॥
प्रागग्नौ करणं दद्यात् अन्यत्दत्त्वा च तृप्तिकृत् ।
एकीकृतं तु भुञ्जानाः प्रीणयन्तु नृणां पितॄन् ॥
परिवेश्य हविः सर्वं तदर्थं यच्च वै स्मृतम् ।
अभिमन्त्र्य मतः पात्रमपोशनप्रदानवत् ॥
अन्नपूर्णस्य पात्रस्य कर्त्तव्य मभिमन्त्रणम् ।
आपो दत्त्वा तु संकल्पमेष श्राद्धविधिर्वरः ॥
वर्जितानि न देयानि पितृप्रीतिं विजानतः ।
हविष्याणि प्रदेयानि वक्ष्यमाणानि वर्जयेत् ॥
निष्पावा राजमाषाश्च कुलत्थ कोरदूषकान् ।
मसूर सितपाकश्च पुष्पकं शाणमर्कटाः ॥
आढकातिलसिद्धार्थाः वल्लाग्निस्वधनान्यके ।
पिण्याकं परिदग्धा च मथितञ्च विवर्जयेत् ॥
नापि नीरस निर्गन्धं करञ्जं सर्वशाककम् ।
अप्रोक्षितं च यत्किञ्चित् पर्युषितञ्च वर्जयेत् ॥
लोहितान् वृक्षनिर्यासान् प्रत्यक्ष लवणानि च ।
लताः कृष्णतिला वर्णाः सर्वाः पालाण्ड् जातयः ।
कृष्ण जीरकवंश्याग्रासणानि च विवर्जयेत् ।
कुष्माण्डेषु कपालाङ्काः कट्फलं तण्डुलीयकम् ॥
नीलकाच समच्छत्रा शोभाञ्जन कुसुम्भिकाः ।
कोविदार करञ्जौ च सुसुणामूलकं तथा ॥

कूष्माण्डं गौरवन्ताकं वृहत्याश्च फलानि च।
करीरफलपुष्पाणि विडङ्गमरिचानि च।
जम्बारिका सुजम्बीरा सुकरी वीजपुरिकाः॥
तुम्बालावूनि पिप्पल्यः पटोलं पिण्डमूलकम्।
मसूराञ्जनपुष्पं च श्राद्धे दत्त्वा पतत्यधः॥
विषच्छिन्नहतं मांस मन्यच्च चिरसंस्थितम्।
नित्यश्राद्धेऽपि वर्ज्यं स्याद्विट्वराहचकोरयोः।
स्वायम्भुवादिभिः सर्वैः मुनिभि र्धर्मदर्शिभिः।
निषिद्धानि न देयानि पितृणां मंहितानि च॥
केन क्रिञ्चिद्दपरेण किञ्चित् किञ्चिच्च किञ्चित्परमस्तु सद्भिः।
ाद्धे निषिद्धं स्वयनादि विद्वन्! सर्वं पितॄणां नतु किञ्च देयम्॥
ौरनिङ्कूलवणादिभिः सुपाकस्य शुद्धिर्भवतीह यस्तु।
द्वीजपूराम्भरिचादियोगात् सिद्धं प्रदेयं नतु दुष्यतीह॥
द्गन्तु यस्य द्विजदीयमानं पित्रादिकस्येह भवेन्मनुष्यैः।
द श्रुतस्येह मनस्यभीष्टमासीत् पुरा यस्य तदेव देयम्॥
तुस्तु यस्मिन् मनसोऽभिलाष श्रद्धा भवेत्तत्र तु दीयमाने।
द्धेऽपि देयं विधिवत्तदेव तदक्षयञ्चेति इतिप्रवादः॥
नीतमम्भोनिधिवत्कथञ्चित् तत्पाणिदत्तं भवतीह विद्वन्!।
माम्बुनिक्षेपकृरिस्मृताभ्या मच्छिद्रतामिति पराशरोक्तिः॥
ीरसारैः चयखण्डयोगात् शाखाभिधेय भवतीह विद्वन्!।
दुग्धपान् मरिचादियोगात् पाकस्य शुद्धिं प्रवदन्ति तज्ज्ञाः॥
व्रीहयो यवगोधुमा मुद्गा माषास्तिला स्तथा।
नीवारश्यामकाद्यन्त मक्रुष्टसम्भवानि च॥
शर्करागुडखण्डानि संशुद्धा चौद्रमेव च।

पितृश्राद्धे हविर्मुख्यं यद्वा तद्वास्य लोभतः ॥
यद्देहिना मत्र शरीरपुष्ट्यैर्धाता ससर्जाशननाम किञ्चित् ।
तत्सर्वधान्याद्यमितं ह्यवादि वेधा मुनीन्द्रेण पराशरेण ॥
श्यामाशराधादिककङ्गुजादि यत्किञ्चदस्मिन् सुखसाररूपम् ।
अरण्यजं वा कृषिसम्भवं वा सस्यन्तदुक्तं ह्यशनेषु विद्वन् ॥
काण्डाङ्कुवं यच्चशनेषु किञ्चित्पङ्काङ्कुवं वा स्थलसम्भवं वा ।
यत्तुच्छसारं बकराजमस्मिन् सर्वाणि धान्यानि च शूकवन्ति ॥
यत्सर्वसारं मनुदन्तु भक्ष्यं निःशूकसूनान्वितमत्र किञ्चित् ।
आप्यायनं देहभृतां तु सद्य सत्प्रोक्तमन्नं ह्यशनेन सद्भिः ॥
प्रतिश्रुतस्य भुक्तस्य कटु तिक्तस्य यत्तथा ।
केचिदूचुरदेयानि ह्यखल्यप्रतिरोपिताः ॥
तुण्डीकरान्यलाबूनि लिङ्गाख्यानि तु यानि तु ।
नित्यं श्राद्धेऽप्यदेय स्यादाह सत्यवतीपतिः ॥
सोङ्कारया वै गायत्र्या दशावर्तितया जलम् ।
पूतन्तु तेन तत्प्रोक्तं सर्वमन्नविशुद्धये ॥
शुद्धवत्योऽथ कूष्माण्ड्यः पावमान्यस्तरत्समाः ।
पूतेन वारिणैताभि रन्नशोधनमुत्तमम् ॥
तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रदत्तवान् ।
प्रोक्षयेदशनं सर्वम् शूद्रदृष्ट्यादिशुद्धये ॥
परिवेषयेत्समं सर्वं न कार्य्यं पङ्क्तिभेदनम् ।
पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः ।
यद्येकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि वार्थलाभ
वेदेश्च दृष्टं ऋषिभिश्च गीतं तद्ब्रह्महत्यां मुनयो वदन्ति ॥

देवान् पितॄन् मनुष्यांश्च वह्निमभ्यागतां स्तथा।
अभ्यर्च्य तु न भुञ्जानो वृथापाक इति स्मृतः॥
एतद्वै ब्राह्मणस्यास्ये जुहोमि चाप्यऽमृतम्।
इदं विष्णुरिति ह्येतन्मन्त्रमुच्चार्य्य चापरे॥
द्विजाङ्गुष्ठं च तत्रान्ने निवेशयन्ति तद्विदः।
जप्त्वा व्याहृतिभि र्गायत्रीमधुमतीरिति॥
सङ्कल्प्यान्न मपोशानं ब्रूयाच्च मधुमच्छ्विति।
आपोशनं प्रदेयान्नं न तत्सङ्कल्पयेद्द्विजः॥
सङ्कल्प्य नरके याति निराशैः पितृभिर्गतैः।
आपोशनो देवपितोः पापो तिष्ठति यो द्विजः॥
सङ्कल्पं कुरुतेऽज्ञानात् स्वस्तेन पितरो हताः।
जप्त्वाथ वैष्णवान् मन्त्रान् विप्रान् ब्रूयाद्यथासुखम्॥
भुञ्जीरन्वाक्यतास्ते तु पितृदेवहितैषिणः।
अत्युष्णमशनं कार्य्यं वचोवाच्य पितृष्वदः॥
शूद्रश्च शूकरध्वाङ्क्षकुक्कुटानपलापयेत्।
भुञ्जते ब्राह्मणा यावत्तावत् पुण्यं जपेज्जलम्॥
पावमान्यानुवाक्यानि पितृसूक्तानि चैव हि।
ततस्तृप्तान् द्विजान् पृच्छेत्तृप्ताः सन्त्वनुशासनम्॥
तृप्ताः स्मेति द्विजा ब्रूयु स्तदन्नं विकिरेद्भुवि।
सकृत् सकृत्पयो दत्त्वा शेषमन्नं निवेदयेत्॥
यथाशानं तथा कृत्वा पिण्डांस्तदनु निर्वपेत्।
यद्यद्भुक्तं द्विजैरन्नं तत्तदादाय विप्रर॥
स्थालीपाकतिलोपेतं दक्षिणाभिमुखस्ततः।
अवनिज्यतिलान् दर्भान् पिण्डार्थं मवनीतले॥

तस्मिंश्च निर्वपेत्पिण्डान् गोत्रनामकपूर्वकान्।
यद्देकलोकं पितृलोकमायुः प्राप्ता स्तथैवं नरकं नरा ये॥
अग्नौ हुतेन द्विजभोजनेन तृप्यन्ति पिण्डे भुवि ते प्रदत्त
यदन्नं लेपकपन्तु क्रमात्तेषु च निक्षिपेत्।
प्रक्षाल्य सलिलं वारि अवनेजनवत् पुनः॥
निवृत्तानर्चयेत्पिण्डान् पुष्पगन्धानुलेपनैः।
दीपवासप्रदानेन पितॄनर्घ्यं समाहितः॥
वासो वस्त्रदशां दद्याद्विधिवन्मन्त्रपूर्वकम्।
केचिद्वस्त्राविकं लोम केचिन्मतं न तत्त्विति॥
पञ्चाशद्वार्षिको यस्तु दद्याल्लोम स्वमंशुकम्।
तदवश्यं प्रदेयं स्याद्विधिसम्पूर्णताकृते॥
पवित्रं यदि वा दर्भं करात्तेषां विनिक्षिपेत्।
प्रक्षाल्य हस्तावाचम्य प्रोक्षणादिक्रमाचरेत्॥
निर्वपन्त्यपरे पिण्डान् प्रागेव द्विजभोजनात्।
खादयेयुः शकुन्तैस्तान् पितृणां तृप्तितत्पराः॥
मातामहानामप्येवं विप्रानाचामयेदथ।
वाक्यातीतद्विजान् स्वस्ति दद्याच्चैवाक्षतोदकम्॥
दक्षिणा हेम देवानां पितृणां रजतं तथा।
शक्त्या दत्त्वा स्वधाकारं व्याहरेत् श्राद्धकृद्द्विजः॥
तिष्ठन् पिण्डान्तिके ब्रूयाद्वाचयिष्ये स्वधामिति।
वाच्यतामिति विप्रोक्तिः प्रवदेद्गोत्रपूर्वकम्॥
स्वधोच्यतामिति ब्रूयादस्तु स्वधेति तद्वचः।
ऊर्जं वहन्ति चश्राद्धं जलं पिण्डेषु सेचयेत्॥
याः काश्चिद्देवताः श्राद्धे विश्वशब्देन जल्पिताः।

प्रीयता मितिच ब्रूयात् विप्रैरुक्तमिदं जपेत् ।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेवच ॥
श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नोऽस्त्विति ।
न्युब्जपिण्डार्घ्यपात्राणि कृत्वोत्तानानि संस्रवान् ॥
छित्वा पिण्डेष्वतो विप्रान् पितृपूर्वं विसर्जयेत् ।
वाजे वाजे इति ह्युक्त्वा आमावाजस्य तान् वहिः ॥
ब्रूयात्प्रदक्षिणीकृत्य तथा चमध्वमित्यपि ।
पिण्डानां मध्यमं पिण्डं पितृन्ध्यायं समाहितः ॥
प्राशयेत् पुत्रकाम्या तु भार्य्या तच्छ्राद्धदस्य तु ।
स्नुषा वापि सगोत्रा वा पुत्रकामा द्विजाज्ञया ।
आधत्त पितरो गर्भं व्याहरेयुर्द्विजातयः ॥
महारोगगृहीतोवा तद्रोगोपशमाय च ।
अत्तु मे पितरो रोगमित्युक्त्वा प्राशयेद्धितम् ॥
अन्यानप्सु कृशानौ वा क्षिपेद्दद्याद्द्विजाय वा ।
अजाय वा प्रदद्यान्न पश्चाद्विप्रविसर्जनम् ॥
उद्दाहं पितृकार्य्ये पाकान्मातामहाय तु ।
एकेनैव हि गच्छन्ति भिन्नगोत्रा स्तथा द्विजाः ॥
अदैवेऽध्वस्थाने तु वक्तव्यमुपतिष्ठताम् ।
अभिरम्यतां स्वधास्थाने विप्रैश्चाभिरताः स्म इ ॥
ऊर्द्ध्वन्तु प्रोष्ठपद्यास्तु प्रतिपादादिकाश्च याः ।
पुण्यास्तास्तिथयः सर्वाः दशापि सह पञ्चभिः ॥
तेषाञ्चतुर्दशी प्रोक्ता शास्त्रे शापहता नराः ।
पितृभ्यश्च त्रयोदश्यां गयाश्राद्धाधिकं फलम् ॥
न तत्र पातयेत्पिण्डान् सन्तानेप्सुः कदाचन ।

पिण्डदानेन कवयो वंशच्छयं वदन्ति हि ॥
सन्तानेप्सु स्त्रयोदश्यां न पिण्डान् पातयेन्नरः ।
पातयेन्न मतीकृत्य प्राह सत्यवतीपतिः ॥
मघासु त्रयोदश्यां पिण्डनिर्वपणं द्विजः ।
ससन्तानो नैव कुर्य्यादित्यन्ये कवयो विदुः ॥

यः संक्रान्ते भानुदिने च कुर्य्यात्
विशेषणं पारणकं द्विजन्मा ।
पिण्डप्रदानं पितृभे च तद्वत्
ज्येष्ठे प्रनष्टे सुतोऽनजोवा ॥

पुत्रदा पञ्चमी कर्तुस्तथैवैकादशी तिथिः ।
सर्वकामा त्वमावास्या पञ्चम्यर्थं शुभा स्मृता ॥
अन्नक्षीरघृतं क्षौद्रमैक्षवक्षावशाकवन ।
एतैस्तु तर्पितैर्विप्रैस्तर्पिताः पितरो नृणाम् ॥
देशः पर्व च कालश्च हविःपात्रं च शक्तितः ।
पितृदैविकचित्तत्वं योगश्चेत् पितृभादिभिः ॥
शौचश्च पात्रशुद्धाच श्राद्धस्य परमा यदि ।
अन्नत्तत्तृप्तिकृच्छ्राद्धे एतत् खलु नचामिषे ॥
यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत् पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्य्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे तथा किञ्चिद्वाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥
सर्वयाम्नं तथा न स्यात्तद्देवामिषमाश्रयेत् ।
ब्राह्मणाश्च स्वयं नाद्यात्ततः स्वादिष्टतं यदि ॥
अथान्यत्पापमृत्यूनां शुद्ध्यर्थं श्राद्धमुच्यते ।

ह्नीन तेन येषान्तु प्रवृत्तमुपतिष्ठति ॥
दन्तिशृङ्गिगरव्याल निरग्निबन्धनैस्तथा।
विद्युन्निर्घातवृक्षैश्च विप्रैश्च स्वात्मना हताः ॥
प्राणसञ्ज्ञातकीटाश्च म्लेच्छैश्चैव हतास्तथा।
पापक्षत्यव एवैते शुभगत्यर्थमुच्यते ।
नारायणबलिः कार्य्यो विधानन्तस्य उच्यते।
ऊर्द्ध्वं षण्मासतः कुर्य्यादेक ऊर्द्ध्वन्तु वत्सरात् ॥
तेषां चैव व्यपोहार्थं कार्य्यो नारायणो बलिः।
धौतवासाः शुचिः स्नात एकादश्यामुपोषितः ॥
शुक्लाम्बरेतु संपूज्य विष्णुमीशं यमन्तथा।
नदीतीरं शुचिर्गत्वा प्रदद्याद्दश पिण्डकान् ॥
क्षौद्राज्यतिलसंयुक्तान् हविषा दक्षिणामुखः।
अभ्यर्च्य पुष्पधूपाद्यैः पुन्नामगोत्रपूर्वकान् ॥
विष्णुध्यानरतः कुर्य्यात् ततः स्नानाम्भसि क्षिपेत्।
निमन्त्रयीत विप्रांश्च पञ्च सप्ताथ वा नव ॥
द्वादश्यां कुतपे स्नानान्धौतवस्त्रान् समागतान्।
हर्याराधनकाङ्क्षया प्रक्षालिताङ्घ्रियुग्मकान् ॥
दक्षिणाप्रवणे देशे शुचिस्तानुपवेशयेत्।
दैवे द्वौ तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान् द्विजान् ॥
आसनावाहनाद्यैश्च कुर्यात् पार्वणवद्द्विजः।
भोजयेद्भक्ष्यभोज्यैश्च क्षीरैश्चवाज्यपायसैः ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिप्रश्नं चरेद्यथाविधि।
भोज्येन तिलमिश्रेण हविष्येन च तान् पुनः ॥
पञ्च पिण्डान् प्रदद्याद्वै देवरूपमनुस्मरन्।

विप्रा ब्रह्मशिवेभ्यश्च त्रीन् पिण्डांश्च यथाक्रमम् ॥
यमाय सानुगायाथ चतुर्थं पिण्डमुत्सृजेत् ।
मृतं सञ्चिन्त्य मनसा गोत्रनामकपूर्वकम् ॥
विष्णुं स्मृत्वा क्षिपेत् पिण्डं पञ्चमञ्च ततः पुनः ।
दक्षिणाभिमुखश्चैव निर्वप्य पञ्च पिण्डकान् ॥
आचम्य ब्राह्मणान् पश्चात् प्रोक्षणादिकमारभेत् ।
हिरण्येन च वासोभिर्गोभिर्भूम्याच तान् द्विजान् ॥
प्रणम्य शिरसा पश्चाद्विनयेन प्रसादयेत् ।
तिलोदकं करे दत्त्वा प्रेतं संस्मृत्य चेतसि ॥
गोत्रपूर्वं क्षिपेत्पाणौ विष्णुं बुद्ध्या निवेश्यच ।
वहिर्गत्वा तिलाम्भस्तु तस्माद्दद्यात्समाहितः ॥
मित्रभृत्यैर्निजैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ।
एवं विष्णुमते स्थित्वा यो दद्यात्पापमृत्यवे ॥
समुद्धरन्ति तं प्रेतं पराशरवचो यथा ।
सर्वेषां पापमृत्यूनां कार्यो नारायणो वलिः ॥
तस्मादूर्ध्वञ्च तेभ्योहि प्रदत्तमुपतिष्ठते ।
एवं श्राद्धैः समस्तान्यः सन्तर्पयति वै पितॄन् ॥
दद्युस्तानुत्तमांस्तस्य पितरस्तर्पिताः परान् ।
विद्यातपोसुखान् पुत्रान् पूज्यत्वमथ योषितः ॥
सौभाग्यैश्वर्यतेजश्च बलं श्रेष्ठमरोगताम् ।
यशःशुचित्वकृत्यानि सिद्धिञ्चैवात्मवाञ्छिताम् ॥
यशस्वन्दीर्घमायुश्च तथैवानुमतं मतिम् ।
अथान्यत् किञ्चिदाख्यामि पितॄणान्तु हिताय वै ॥
कृतेनैव स्वल्पेनापि प्राप्नुवन्ति विधेः फलम् ।

उच्छिष्टस्य विसर्गार्थं विधिस्तात्कालिको हि यः॥
श्राद्धश्चैर्विहितं यत्प्राक् पितृगणाहितैर्षिभिः।
आदाय सर्वमुच्छिष्टमवनेजनवद्बुधः॥
तत्रैव भक्षयेद्भूमौ तिलदर्भसमन्वितम्।
नरकेषु गता ये वै अल्पमृत्युमृता मम॥
एतदाप्यायनन्तेषां चिरायैतद्ब्रवीन्मनुः।
करस्य मध्यतो देवाः करपृष्ठे तु राक्षसाः॥
पात्रस्यालम्भनाद्दोच तस्मात्तन्न प्रदर्शयेत्।
दर्भाश्च स्वयमानेया दक्षिणाद्रवर्णोद्भवाः॥
तर्पणाद्युच्छिता ये वै इत्याद्याश्च विमर्जयेत्।
न कुशघ्नमित्याहुर्दर्भमूलं कुशः स्मृतः॥
छिन्नदर्भा इति प्रोक्ता तदग्रं कुतपः स्मृतः।
हरिता याज्ञिका दर्भाः पीतकाः पाकयाज्ञिकाः।
सकुशाः पितृदैवत्यच्छिन्ना वै वैश्वदेविकाः॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये जनार्दनः।
दर्भाग्रे शङ्करस्तस्मौ दर्भाः देवत्रयान्विताः॥
अहन्येकादशे श्राद्धे प्रतिमासं तु वत्सरम्।
प्रतिसम्वत्सरं कार्यमेकोद्दिष्टं तु सर्वदा॥
एकस्य प्रथमं श्राद्धं मर्वागब्दात्तु मासिकम्।
प्रतिसम्वत्सरस्यैव शेषत्रिपुरुषं स्मृतम्॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुतैः।
एकोद्दिष्टं प्रकुर्वीत पित्रोरप्यत्र पार्वणम्॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं द्विजैः।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं चयाहनि॥

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रपातिते ॥
पित्रादयस्त्रयो यस्य प्रशस्ता स्वनुक्रमात् ।
स भूते पार्वणं कुर्य्यात् अष्टकानि पृथक् पृथक् ॥
सपिण्डीकरणादूर्ध्वं पितुर्यः प्रपितामहः ।
स तु लेपभुगित्येव प्रलुप्तपितृपिण्डतः ॥
सपिण्डीकरणादूर्ध्वं कुर्यात् पार्वणवत्सदा ।
प्रतिसम्वत्सरं विद्वान् च्छागलेयोविधिः स्मृतः ॥
सपिण्डता तु कर्त्तव्या पितुः पुत्रैः पृथक् पृथक् ।
स्वाधिकारप्रवृत्तत्वादितरः श्राद्धकर्तृवत् ॥
यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं भवेत् ।
प्रतिमासं तस्य कुर्य्यात् प्रतिसम्वत्सरं तथा ॥
अर्वाक् सम्वत्सरात् वृद्धौ पूर्णे सम्वत्सरेऽपि च ।
एकपिण्डीकृतानान्तु पृथक्त्वंनोपपद्यते ॥
सपिण्डीकरणादूर्ध्वं मृतकृष्णचतुर्दशीम् ।
ये सपिण्डीकृतास्तेषां पृथक्त्वं नोपपद्यते ॥
पृथक्त्वकरणे तस्य पुनः कार्या सपिण्डता ।
स्त्रियं श्वश्र्वा पतिर्माता तया सह सपिण्डयेत् ॥
तदभावे पितामह्या तन्माता चापरे विदुः ।
नान्यथा तु पितामह्या मातामह्यास्तथापरे ॥
उदके पिण्डदानञ्च भर्त्रा सह प्रदीयते ।
अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषोऽपिवा ॥
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ।
अपुत्राश्च मृता ये च कुमाराः संस्कृता अपि ।

समानता न तेषां स्यान्न स्वधा नाभिरस्यताम्॥
भर्त्ता सपिण्डता स्त्रीणां कार्येति कवयो विदुः।
श्वश्र्वा सहापरे तस्यास्तन्माता वा परे विदुः॥
अनपत्येषु प्रेतेषु न स्वधा नाभिरस्यताम्।
एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरस्यताम्॥
मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारस्य चैव हि।
दद्याद्वै मासिकं श्राद्धं सम्वत्सरं तु नान्यथा।
अप्रत्ययगतश्चैव कुलदेशस्यवर्त्स्यिता॥
यो यथा कृपया युक्तः स तथैव हि निर्वपेत्।
दार्व्यार्थिं इष्यते रूढे मानवं लिङ्गमेव च॥
दृढीकृताच विद्वद्भिर्लोकरूढिर्गरीयसी।
विकल्पेषु च सर्वेषु स्वयमेवैक मादितः॥
अङ्गीकरोति यः कर्त्ता सविधिस्तस्य नेतरः॥
बहून्याजयते यस्तु वर्णबाह्यांश्च नित्यशः।
म्लेच्छांश्च शौण्डकांश्चैव स विप्रो बहुयाजकः॥
वर्त्तते यश्च चौर्येण सुवर्णेनोपहारकः।
स गृहीतसवर्णास्त्री स विप्रो गण उच्यते॥
मृते भर्त्तरि या नारी रहस्यं कुरुते पतिम्।
ते तु वै आपयेद्गर्भं सा नारी गणिका स्मृता॥
अन्यदत्ता तु या कन्या पुनरन्याय दीयते।
अस्या अभिन्नभोक्तव्यं पुनर्भूः कीर्तिता हि सा॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता।
पुनः पत्युर्गृहं गच्छेत् पुनर्भूः सा द्वितीयका॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते।

सवर्णाय सपिण्डाय पुनर्भूः सा तृतीयका॥
प्राप्ते द्वादशवर्षेऽ च या रजो न बिभर्ति हि।
धारितस्तु तया रेतो रेतोधाः सा प्रकीर्तिता॥
भर्तुर्या व्यभिचारेण नारी चरति नित्यशः।
अस्या अपि न भोक्तव्यं सा भवेत् कामचारिणी॥
भर्तुः शासनमुल्लङ्घ्य स्वकामेन प्रवर्तते।
दीव्यन्ती च हसन्ती च सा भवेत् कामचारिणी॥
पतित्यक्ता तु या नारी गृहादन्यत्र गच्छति।
गृहेषु रमते नित्यं स्वैरिणीन्तां विनिर्दिशेत्॥
पतिं हित्वा तु या नारी सवर्णमन्यमाश्रयेत्।
वर्तते ब्राह्मणत्वेन द्वितीया स्वैरिणी तु सा॥
मृते भर्तरि या बाल्या तृष्णमातुरा तु सा।
तवाह मित्युपगता तृतीया स्वैरिणी तु सा॥
देशकालमुपेक्ष्यैव गुरुभिर्या प्रदीयते।
उत्पन्नसाहसान्यस्मै चतुर्थी स्वैरिणी तु सा॥
अमुपुत्रास्तु ये जातास्ते वर्ज्या हव्यकव्ययोः।
तथैव यतयस्तासां वर्जनीया प्रयत्नतः॥
श्राद्धन्तैश्च न कर्तव्यं प्रतिलोमविधानतः।
वर्णाश्रमवहि स्यास्ते सङ्कीर्णजन्मसम्भवाः॥
मातृणाञ्च पितृणाञ्च स्त्रीयानां पिण्डदाः स्मृताः।
उपपतिसुतो यस्तु यश्चैव दीधिषूपतिः॥
परपूर्वा पतेर्जाता वर्ज्याः सर्वे प्रयत्नतः।
अजापालादिजाताश्च विशेषेण च वर्जयेत्॥
मृतानुगमनं नास्ति ब्राह्मणाब्रह्मशासनात्।

इतरे तुर्यवर्णेषु तपः परममुच्यते ।
भर्तुश्चित्यां समारोहेत् याच नारी पतिव्रता ।
अहन्येकादशे प्राप्ते पृथक्पिण्डे नियोजयेत् ॥
श्रौतैश्च स्मार्त्तमन्त्रैश्च दम्पत्या वैव ताङ्गतौ ।
एकमृत्युगतौ चैव वह्नावेकत्र यौ कृतौ ॥
एकत्वं तु तयोर्यस्मात् जातमाद्याय सानकम् ॥
एकादशादिकं श्राद्धं एकमेव स्मृतं बुधैः ।
एकत्वमिच्छन्ति मतिप्रहीणा एकादशाद्येषु तृणान्तु नार्य्यः ।
। स्वर्गमार्गे विनिहत्य कुर्युःस्त्रीसत्वदाता नरकेऽधिवासम् ॥
समानमृत्युना यस्तु मृतोभर्त्ता च योषिताम् ।
तस्याः सपिण्डता तेन पिण्डमेकं तु निर्वपेत् ॥
स्त्रीपात्रं पतिपात्रे तु सिञ्चयेदेकमेवहि ।
श्राद्धे त्रिपुरुषे लीणि तत् प्रत्यक्षं पितृन् प्रति ॥
पत्या सह परा सुप्ता तेनैवास्याः सपिण्डता ॥
पितामह्यापि चान्यत्र ह्येतदाह पराशरः ।
अन्यप्रीतौ न चान्यस्य तृप्तिः कस्यापि दृश्यते ॥
एवं धीमन्बसुचापि तस्मान्नेकत्वमात्मने ।
एकत्वाश्रयणो धर्मो नार्य्यालुब्धो भवेद्ध्रुवम् ॥
तस्याः सुकृतसामर्थ्यात् पत्युः स्वर्गं इहिष्यते ।
भर्त्रा सह मृता यातु नाकलोकमभीप्सती ॥
साद्यश्राद्धे पृथक् पिण्डो नैकत्वन्तु स्मृतं बुधैः ।
पतिमृत्युः स्त्रियोमृत्यो र्निमित्तमेव जायते ॥
निर्निमित्तो मवै मृत्यु र्मृत्युना चैकता भवेत् ।

भर्त्रा सह मृता भार्य्या भर्त्तारं सा समुद्धरेत् ॥
तस्याः पतिव्रताधर्म्म एकत्वे तु कृतो भवेत् ।
बलीयस्त्वेन धर्मस्य तुच्छत्वाच्च समस्तथा ॥
धर्मेण लिप्यते पाप मेकत्वे समता तयोः ।
नैकत्वन्तु तयो रस्मादकृत्यं श्राद्धकर्मणि ॥
पृथगह्नि कर्त्तव्यं श्राद्धमेकादशादिकम् ।
यानि श्राद्धानि कार्य्याणि तान्युक्तानि पृथक् पृथक्
कर्त्तव्यं यच्च तत्प्युक्ता विशेषश्च निबोधत ।
औरसाद्या मृताः पुत्रा मुनिभिर्द्वादशैव तु ॥
यथाजात्यनुसारेण वर्णानामनुसारतः ।
श्राद्धदाः क्रमेण स्युः पूर्वाभावे परः परः ॥
यस्माद्यो जायते पुत्रः स भवेत्तस्य पिण्डदः ।
तस्मात्तस्मादपीहन्ते मृताः प्रेतत्वमागताः ॥
तस्मादवश्यमेवं हि श्राद्धं कार्य्यं विधानतः ।
शूद्रस्य दासीजः पुत्त्रः कामदस्तु स पिण्डदः ॥
जात्या जातः सुतो मातुः पिण्डदः स्यात् सुतोऽपि च
जनकस्य न किञ्चित् स्यादर्थात्कामप्रवर्त्तनात् ॥
वायुभूताश्च पितरो दत्ताभिकाङ्क्षिणः सदा ।
तस्मात्तेभ्यः सदा देयं नृभिर्श्च मरतैः सदा ॥
ये खड्गिमांसमधुपायससर्पिरन्नै-
र्दर्शे च कालसहिते च सुपात्रदत्तैः ।
प्रीणन्ति देवमनुजान् पितृवंशजांश्च
तेषां कृणां तु पितरो वरदा भवन्ति ॥

उक्तश्राद्धविधिस्त्वेष वर्णानां पितृतृप्तिकृत्।
एवं दास्यति यः श्राद्धं वरान् सर्वानवाप्स्यति ॥
इति श्रीवृहत्पाराशरीये श्राद्धनिर्णयो नाम
पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः।

### अगस्त्य उवाच।

अथातः सम्प्रवक्ष्यामि शुद्धिं पाराशरोदिताम्।
सूतके चाप्यशौचे वा यथावत्तां निबोधयेत् ॥
प्रसवं सूतकं प्राहु राशौचं शाव मुच्यते।
यावत्कालञ्च यन्मासं तथा तावन्निगद्यते ॥
केषाञ्चित्तेन वै मासं केषाञ्चिन्मरणान्तिकम्।
सद्यःशौचास्तथा चान्ये चान्ये चैकाहिकाः स्मृताः ॥
त्रिषट्दशद्वादशाभ्यां दशापि होष पञ्चभिः।
तान्येव त्रिगुणान्याहु र्दिनान्येव मनीषिणः ॥
वक्ष्यमाणं निबोध त्व मुक्तक्रममिदं द्विज!।
शक्तिजो यन्मुनीनाञ्च प्राक् ब्रवीत् कलिधर्मवित् ॥
विष्णुध्यानरतानाञ्च सदैव ब्रह्मचारिणाम्।
गृहमेधिद्विजानान्तु तथैव व्रतचारिणाम् ॥
वेदतत्वार्थवेत्तृणां नित्यस्नानकृतां तथा।
अन्तःसंसर्गिणामेषां नाशौचं नापि सूतकम् ॥
संसर्गं वर्जयेद्यत्नात् संसर्गो दोषकारणम्।

वदन्ति मुनयः सर्वे वर्जने स्यान्न किल्बिषी ॥
वदन्ति मुनयः सर्वे संसर्गो दोषकारणम् ।
असंसर्गः स्वकर्मस्थो द्विजो दोषैर्न लिप्यते ॥
दानोद्वाहेष्टिसङ्ग्रामे देशविप्लवकादिके ।
सद्यः शौचं द्विजातीनां सूतकाशौचयोरपि ॥
दातॄणां हन्तिनामैके कवयः सत्त्वामपि ।
सद्यः शौचमदोषाणा मूचुर्धर्मविदः कलौ ॥
सर्वमन्त्रपवित्रस्तु अग्निहोत्री षडङ्गवित् ।
राजा च श्रोत्रियश्चैव सद्यःशौचः प्रकीर्तितः ॥
देशान्तरगते ताते मृते वापि सगोत्रिणि ।
शेषाहानि दशाहार्वाक् सद्यः शौचमतः परम् ॥
पिण्डनिर्वर्तने जाते मृते वापि सगोत्रजे ।
सद्योऽपीष्टेति वासे स्यात् सद्यः शौचं विशोधनम् ॥
सद्यः शौचं विधातव्यं सर्वासु दत्तजन्मनः ।
बान्धवादिषु विज्ञेय मन्यदूर्ध्वं विधीयते ॥
नाशौचसूतके स्नाता नृपतीनां कदाचन ।
यज्ञकर्मनिरतस्य ऋत्विजो दीक्षितस्य च ॥
पृथक् पिण्डमृते काले विदेशेऽप्यतच श्रुतेः ।
जाते वापि च शुद्धिः स्यात् सद्यः शौचादसंशयम् ॥
सवेदः साग्निको दाहात् ब्राह्मणः शुद्धिमाप्नुयात् ।
तथैकाशी नृपे संस्थे तथैव ब्रह्मचारिणि ॥
दुर्भिक्षे राष्ट्रभङ्गे च आपत्कालउपस्थिते ।
उपसर्गाहतेवापि सद्यः शौचं विधीयते ॥
गोविप्रार्थविपन्नानां पाण्डवेषु तथैव च ।

ते योगिभिःसमाख्येयाः सद्यः शौचं विधीयते ॥
विप्रे संस्थे व्रतादर्वाक् श्रोत्रिये च तथा द्विजैः।
अनूचाने गुरौ चैव आचार्य्ये वापि संस्थिते ॥
असंस्कृतक्रिया रात्रिं श्रोत्रिये निधनङ्गते।
त्रिरात्रमेव शौचं स्यात्तथैवोदकदायिनः ॥
विधानेनाग्निको विप्र स्त्रिरात्राच्छुद्धिमाप्नुयात्।
मनीषिणः परे ब्रूयु रसपिण्डे त्र्यहं त्विति॥
प्रेतभूतञ्च यः शूद्रं ब्राह्मणोज्ञानदुर्बलः।
नियतं ह्यनुगच्छेत त्रिरात्रमशुचि र्भवेत्॥
षड्रात्रं नवरात्रञ्च शवस्पर्शो विशुद्धकृत्।
त्र्यहश्चैव विशुद्ध्यर्थं धर्मशास्त्रविदो विदुः॥
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफल मनुपूर्वं लभन्ति च॥
अशुचित्वं न तेषान्तु पापं वाशुभकारणम्।
जलावगाहनं तेषां सद्यः शौचं विधीयते॥
असगोत्रम सम्बन्धं प्रेतीभूतं तथा द्विजम्।
उद्धृत्यदग्धद्विजाः सर्वे स्नानात्ते शुचयः स्मृताः॥
एकरात्रं वहन्त्येके सद्यः स्नाने तथा परे।
गोग्रहार्दिहतानाञ्च मुनयः शुचिकारणम्॥
हतश्च यो विपद्येत शत्रुभिर्यत्र कुत्रचित्।
स मुक्तो यतिवत्सद्यः प्रविशेत्परवेश्मनि॥
सन्न्यासी युद्धसंस्थश्च सम्मुखं शत्रुभिर्नरः।
सूर्य्य मण्डलमेत्तारावित्ति प्राङ्मनीषिणः॥
पराङ्मुखे हते सैन्ये यो युद्धाय निवर्त्तते।

तत्पदानीष्टतुल्यानि स्यर्थो प्राह पराशरः ॥
वह्नौ तु प्रविशेद्यस्य शोणितं शिरसः पतत् ।
सोमपानेन ते तुल्या बिन्दवो रुधिरस्य च ॥
सन्यासेन मृता ये वै प्रधने ये तनुत्यजः ।
मुक्तिभाजनकास्ते ते इति वेदो निदर्शनम् ॥
सद्यः शौचं विधातव्यं शुचिरेवं विधीयते ।
नोच्यन्ते ते मृता लोके सद्यो ब्रह्मपुरंगमाः ॥
सन्ध्याचारविहीनानां सूतकं ब्राह्मणा ध्रुवम् ।
अशौचं वा दशाहं स्यादिति प्राह पराशरः ॥
राज्ञस्तु द्वादशाहं स्यात् पक्षो वैश्यस्य पावनः ।
वृषभस्य तथा मासं त्यजेदाप्यति धर्मतः ॥
क्षत्रियादि पक्षः सद्भिर्मातुलादिषु कीर्तितः ।
गर्भस्रावे तु तेरुक्ता रात्रयो माससम्मिताः ॥
स्रावद्गर्भस्य विद्वांसो मासादर्वाक् चतुर्थकम् ।
पाताद्गर्भं वदन्त्येके तत्राधिक्यं च सूतकम् ॥
ऋणव्यसनरोगार्तपराधीनकदर्यकम् ।
तृष्णावन्तो निराचाराः पितृमातृविवर्जिताः ॥
स्त्रीजिताश्चानपत्याश्च देवब्राह्मणवर्जिताः ।
परद्रव्यं जिहीर्षन्तः सद्यः सूतकिनः सदा ।
सूर्वे किं सत्यशुद्धेवा अन्यदापद्यते यदि ॥
पूर्वेणैव तु शुध्येत जाते जातं मृते मृतम् ।
एकपिण्डाः सदायादाः पृथक् दारनिकेतनाः ॥
जन्मनि मरणे वापि भवेत्तेषां तु सूतकम् ।
अग्नौ भृगुप्रपाते च देशान्तरमृतेऽपि वा ॥

बाले प्रेतेच संन्यस्ते सद्यः शौचं विधीयते।
अजातदन्ता ये बाला येच गर्भाद्विनिःसृताः॥
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया।
विवाहोत्सवयज्ञेषु चान्तराशौचसूतके॥
पूर्वसङ्कल्पितानर्थान् तानशौच्यान् ब्रवीन्मनुः।
शिल्पिनः कारुकाश्चैव दासीदासास्तथैव च॥
दूत्यादीनां न ते स्नातामनुगच्छन्ति यां द्विजः।
पिता पुत्रेण जातेन दद्यात् श्राद्धन्तथोदितम्।
पितॄणां विधिवद्दानं तत्र तत्राप्यनन्तकम्॥
प्रसवे च द्विजातीनां न कुर्य्यात्सङ्करं यदि।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः॥
अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात्।
उद्बध्य म्रियते यस्तु न तस्याग्निः प्रदीयते॥
न स्नायान्नोदकं दद्यान्नापि कुर्य्याद्विशोचताम्।
सर्पेण शृङ्गिणा वापि जलेन चाग्निना तथा॥
न स्नानादौ विपन्नस्य तथा चैवात्मघातिनः।
अर्वाक् द्विशायनाद्‌ग्निं न दद्यान्मृतकस्य च॥
किन्तु तान्निखनेद्भूमौ कुर्यान्नैवोदकक्रियाम्।
सर्पादिप्राप्यमृत्यूना मग्निदाहादिकाक्रियाः॥
षण्मासेतु गते कार्या इति प्राह पराशरः।
शास्त्रदृष्टं बुधैः कार्यमन्यत्स्वयनादिकम्॥
तत्कृत्वाऽप्युक्तदिवसैः शुद्धमर्हति धर्मतः।
अन्यायहतविप्राणां ये वोढारो भवन्तिहि॥
अग्निदाश्चैव ये तेषां तथोदकादिदायिनः।

उद्बन्धनमृतस्यापि यश्छिन्द्यात् रज्जुपाशकम्॥
ते सर्वे पापसंयुक्ताः प्रायश्चित्तस्य भाजनाः।

यः सूतकाशौचविशुद्धकृत् स्यात्
आख्याय कालन्तमनुक्रमेण।
पाराशरस्यास्य, अनिश्चिताया
व्याख्यास्ततो निष्कृतयो द्विजास्ताः॥

सूतकाशौचयो रुक्ताः शुद्धिरस्याऽनुपूर्वशः।
सर्वैनसां विशुद्ध्यर्थं प्रायश्चित्तमथाब्रवीत्॥
मनुर्वा याज्ञवल्क्यस्तु वशिष्ठः प्राह निष्कृतिम्।
सा कृतादिषु वर्णानां सति धर्मे वपुष्मति॥
मानसा वाचिका दोषास्तथा वै कार्य्यकारिताः।
धर्माधीना नृणां सर्वे जायन्ते तेऽप्यनिच्छताम्॥
तेषामुपरमाशायां प्रेत्येह शुभमिच्छताम्।
शक्तिज्ञो निष्कृतिं प्राह युगधर्मानुरूपतः॥
निष्कृतिं व्यवहाराणां सर्वं निष्कृतिकृद्यतः।
कति विप्रैः कथं रूपैरिति वाच्या भवेद्धि सा॥
तद्रूपञ्च प्रवक्ष्यामि यावद्भिः सा द्विजैर्भवेत्।
यथाविधाश्च विप्राः स्युरिति विद्वन्! प्रकीर्त्यते॥
पर्षद्दशवरा प्रोक्ता ब्राह्मणैर्वेदवित्तमैः।
तं यं ब्रूयुः स धर्मः स्यात् स्वयम्भूरित्यकल्पयत्।
देशशास्त्रविदो विप्रा यं ब्रूयुः सप्त पञ्च वा।
त्रयो वापि स धर्मः स्यादेको वाध्यात्मवित्तमः॥
संयमं नियमं वापि उपवासादिकञ्च यत्॥
तद्गिरा परिपूर्णः स्यान्निष्कृतीरर्थकारिकाः।

न लक्षणे तु मूर्खाणां नचैवाधर्मवादिनाम् ॥
अविदुषां नातिलुब्धानां नचापि पक्षपातिनाम्।
श्रुताध्ययनसम्पन्नः सत्यवादी जितेन्द्रियः॥
सदा धर्मरतः शान्तः सदापर्षत्वमर्हति।
न सा वृद्धैर्न तरुणै र्न सुरूपैर्धनान्वितैः॥
त्रिसिरेकेन पर्षत् स्याद्विद्वद्भिर्विदुषापि च।
तनया वयसापि स्यु र्वृद्धधर्मविदो द्विजाः॥
शिशवोऽपि हि मध्यस्थाः सर्वत्र समदर्शनाः।
न सा विप्रै र्भवेद्वृद्धै र्वृद्धा स्यु र्धर्मवादिनः॥
यत्र सत्यं स धर्मः स्यात् स्थलं यत्र न तादृशम्।

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मो वृथा यत्र न सत्यमस्ति
सत्यं न तद्दूयत्नच्छदानुविद्धम्॥

निष्कृतौ व्यवहारे च वृद्धस्याशंसनेऽपि च।
धर्मं वा यदिवाऽधर्मं पर्ष यत्प्राह तद्भवेत्॥
स्त्रीणाञ्च बालवृद्धानां क्षीणानां कृशरीरिणाम्।
उपवासाद्यशक्तानां कर्त्तव्योऽनुग्रहश्च तैः॥
ज्ञात्वा देशञ्च कालञ्च व्ययः सामर्थ्यमेव च।
कर्त्तव्योऽनुग्रहः सद्भि र्मुनिभिः परिकीर्तितः॥
लोभान्मोहाद्भयान्मैत्र्याद्यदि कुर्युरनुग्रहम्।
नरकं याति ते मूढा शतधा वाग्नवाचिनः॥
प्रविश्य मोक्षमान्ते वै पर्षदानुग्रहात्स्थितः।
यथाकालं प्रकुर्युस्ते प्रायश्चित्तन्तदीरितम्॥

किमन्वयं याचते देवः वदन्तोऽत्र द्विजातयः ।
सर्वे कुर्वन्ति नियतं गतपापं न संशयः॥
प्रसादो विविधो दैव्यो दैत्याश्चासुरयेवच ।
क्रीड़यापि च तत्रैव देयास्तथैव ते द्विजाः ॥
व्यवहारो गोसमैस्तु ब्रूयाद्वापि च वै रतः ।
तथाज्ञतन्तु तत्पापन्तत्तथैव निवेदयेत् ॥
यस्तेषामन्यतो ब्रूयात् स पापीयानृपतत्यधः ।
सत्यमसत्य मेवात्र विपर्यस्तं वदेदितः ॥
स एवानृतवादी स्यात् सोऽनन्तनरकं व्रजेत् ।
ज्योतिषं व्यवहारञ्च प्रायश्चित्तं चिकित्सितम् ॥
अजानन्यो नरो ब्रूयात् साहसं किमतः परम् ।
व्यवहारश्च तैः प्रोक्तो मन्वाद्यै धर्मवत् क्रमिः ॥
प्रजाभिर्न तु सर्वाभिर्नान्यैश्चतुर्भिर्मानवैः ।
तत् साधकप्रमाणानि व्याख्यितानि न तैर्विना ॥
जनादिनीचदिव्यानि साक्ष्योक्त्या शपथानि च ।
अन्ये जनपदाचारा यथाधर्म स्तथापरः ॥
पर्षद्भि र्ब्राह्मणैर्मत्वा निर्णेतव्यो यथाविधिः ।
यत्र जात्यनुसारेण देशकालानुधर्मतः ॥
कर्त्तव्यः सत्तमैः सर्वं माननीयोऽभिवादिभिः ।
गोब्राह्मणहतानाञ्च ये स्युर्दोहादिकारिणः ॥
तप्तकृच्छ्रेण शुद्ध्येयुरिति पाराशरोऽब्रवीत् ।
भोजयेद्ब्राह्मणान् पश्चात् स दद्या गोश्च दक्षिणा
जायते पापनिर्मुक्तः शक्तिसूनो र्यथा वचः ।
धर्माशिका निवृत्ता ये ब्रह्मचर्याश्रया द्विजाः ॥

वैकालिकास्तु विज्ञेयाः सर्वकार्य्यविवर्जिताः।
सर्वे प्रविशयेयुर्वै ते च बैडालिकैः समाः॥
तेषां सर्वाण्यपत्यानि पुत्रसैः सह घातयेत्।
ब्रह्मघ्नश्च सुरापश्च स्तेयी गुर्वङ्गनागमाः॥
एतेषां निष्कृती ब्रूयादेतत् संसर्गिणा मपि।
द्वादशाब्दन्तु विचरेद्ब्रह्मघ्नस्तत्कपालधृक्॥
सर्वत्र ख्यापयन् कर्मभिक्षा विप्रेषु सञ्चरन्।
दृष्ट्वा सेतुं समुद्रस्य स्नात्वा तु लवणाम्भसि॥
ब्राह्मणेषु चरन् भिक्षां स्वकर्म ख्यापयन् शुचिः।
मुण्डितस्तु शिखावर्जं स कौपीनो निराश्रयः॥
चीरचीवरवासा वै त्रिः स्नायी रुन् शुचिर्व्रती।
संयताश्चरेच्छान्त स्छत्रोपानदृवर्जितः॥
ब्रह्मघ्नोऽस्मीत्यहं वाच मिति सर्वत्र वै वदेत्।
गवाञ्च विंशतिर्दद्याद्दक्षिणां रूपसंयुताम्॥
ब्राह्मणेभ्यो निवेद्यैताः शुचिराख्याय भूपतेः।
पूर्वोक्तप्रत्यवायानां प्रायश्चित्त मिदं स्मृतम्॥
ब्राह्मणानां प्रसादेन तीर्थेषु गमनेन च।
गोशतस्य प्रदानेन शुध्यन्ति नात्र संशयः।
अवभृत्येश्व मेधस्य स्नात्वा शुद्धि मवाप्नुयात्॥
आख्याय नृपतेर्वापि तेन संशोधितः शुचिः।
महापापानि सर्वाणि कथयित्वा महीपतेः॥
निष्कृतिं तद्गिरा दद्या दन्यथा तेऽपि तत्समाः।
रोगार्त्ताङ्गं द्विजं वापि मार्गे खेदसमन्वितम्॥
दृष्ट्वा कृत्वा निरातङ्कं ब्रह्मघ्नः शुद्धिमाप्नुयात्।

असंख्यातं धनं दत्त्वा विप्रेभ्यो वापि शुध्यति ॥
अरण्ये निर्जने यष्ट्वा शुध्येत् त्रिवेदसंहिताम् ।
सुरापस्य प्रवक्ष्यामि निष्कृतिं श्रोतु मर्हसि ॥
सुरापस्तु सुरान्तप्तां पयो वा जलमेव वा ।
तप्तं गोमूत्रमाज्यं वा पीत्वा मृतोऽपि शुध्यति ॥
यदि वा चैलवासो वा ब्रह्महत्याव्रतञ्चरेत् ।
यद्यज्ञानात्पिबेद्विप्रो द्विजातिर्वा सुरां पुनः ॥
पुनः संस्कारकरणात् शुध्येदाह पराशरः ।
स्तेयं कृत्वा सुवर्णस्य शुद्धमेव द्विजातयः ॥
समर्प्य मूषलं राज्ञः ख्यापये स्तेय कर्मकृत् ।
शक्तिञ्चोभयतस्तीक्ष्ण मायसं दण्डमेव च ॥
खादिरं लगुडं वापि हन्यादेकेन तं नृपः ।
जीवतोऽपि भवेत् शुद्धो मुक्तो वा तेन पावनः ॥
मृतश्च प्रेत्य संशुध्येत् पाराशरवचो यथा ।
न स्त्री प्रतिकृतं कृत्वा अग्निवर्णां च तां धमेत् ॥
गुर्वङ्गना गमनस्तस्या लोहमय्यां तु स्थापयेत् ।
वृषणौ पुनरुत्कृत्य नैऋत्यामुत्सृजेत्ततम् ॥
स मृतः शुद्धिमाप्नोति नान्यस्तस्य तु निष्कृतिः ।
सम्वत्सरं चरेत् कृच्छ्रं प्राजापत्य मथापि वा ॥
चान्द्रायणं चरेद्वापि त्रीन् मासानि जितेन्द्रियः ।
व्रतं तु क्रियमाणे वै विपत्तिः स्यात् कथञ्चन ॥
स मृतोऽपि भवेच्छुद्ध इति धर्मविनिर्णयः ।
अनिर्दिष्टस्य पापस्य तथोपपातकस्य च ॥
तच्छुद्धौ पावनं कुर्यात् चन्द्रव्रत समाश्रितः ॥

दानकाले तु संप्राप्ते पात्रे चासन्निधौ जलम् ॥
अन्यविप्रकरे दद्याद्दानं पात्राय दीयते ।
विष्णुस्ते तारणायास्तु गृह्णन्ति हि करोदकम् ॥
तद्दानं ब्रह्म संप्राप्त मक्षय्य मिति विष्णुगाः ।
लक्ष्मीष्टा च यद्दत्तं दरिद्रायार्थिने द्विज ! ॥
तदक्षय्यं समुद्दिष्ट मिति पराशरोऽब्रवीत् ।
राज्यभ्रष्टञ्च राजानं यस्तं राज्ये निवेशयेत् ।
विष्णुलोकसमं भुज्य भवेत्पतिर्दिवौकसाम् ॥
प्रतिगृह्य द्विजार्थं यो न यच्छति च तं पुनः ।
न च स्मारयते विप्र स्तुल्यस्तदुपपातकम् ॥
प्रतिश्रुत्य तु यत्किञ्चिद्द्विजेभ्यो न ददाति यः ।
स वै द्वादश जन्मानि सृगालीं योनिमाप्नुयात् ॥
धेन्वादीनि प्रवक्ष्यामि यथा लक्षणदीरितान् ।
मानभूमिन्तिलादीनां यथावत्तां निबोधत ॥
अजातदन्ता या तु स्याद्गर्भदन्तसमन्विता ।
वर्षादर्वाक् चतुर्याचे यावदेतत् प्रकीर्तिता ।
सुशीला च सुवर्णा च अरोगा च यशस्विनी ॥
सुवत्सा प्रथमं सुता धेनुरेभिरभिधीयते ।
अरोगा या परिक्लिष्टा प्रसवत्यप्रसूतिका ॥
सूता सातिपयोयुक्ता सा गोमामान्यतः स्मृता ।
पूर्वोक्तगुणसंयुक्ता प्रत्यङ्ग प्रसदा तथा ॥
साथ गौर्धेनुरित्युक्ता वाशिष्ठस्यवचो यथा ॥
पञ्चगुञ्जो भवेन्माषः कर्षः षोडशभिस्तैः ।
तैश्चतुर्भिः पलं प्रोक्तं दाने मानं च पुण्यदम् ॥
भद्रनारैकहस्ताभिः प्रस्तीभिस्तालस्तभिः ।

माषा न्नतै चतुर्भिश्च वेतिकेति प्रकीर्तिता: ॥
ताभिश्चतसृभि: प्रस्थश्चतुर्भिराटकश्च तै:।
द्रोणश्चतुर्भिस्तै स्तम्भो धान्यमानं प्रकीर्तितम् ॥
तैलप्रभृतिभिर्भाण्डं चतसृभिर्यत्प्रपूर्यते।
तैश्चतुर्भिश्च कूर्चश्च तैश्चतुर्भिश्चवैफलम् ॥
पातैश्चतुर्भि: स्यात्तन्त्री पाटी तन्त्र चतुष्टयम्।
करकं चतसृभि स्ताभिश्चतुर्भिस्तैर्घट: स्मृत: ॥
इत्येतै: कविभि: प्रोक्तं छतगोतिलगोसमा:।
किञ्चिच्च वस्तुनोक्तेन दानस्य तु पुन: पुन: ॥
दीयते यद्दरिद्राय कुटुम्बिने तदक्षयम्।
सत्कुलाय विप्राय भक्त्या परमया वसु ॥
दीयन्ते वेदविदुषे तदुपतिष्ठन्ति यौवने।
अथान्यत्सम्प्रवक्ष्यामि दानानि निष्फलानि तु ॥
तथा निष्फलजन्मानि तथा तच निबोधत।
वृथा जन्मानि चत्वारि वृथा दानानि षोडश ॥
तानि पृथक् प्रवक्ष्यामि निबोध त्वं द्विजोत्तम!।
अपुत्रस्य वृथा जन्म ये च धर्मबहिष्कृता: ॥
दरिद्रस्य वृथा जन्म व्याधितस्य तथैव च।
अपुण्यस्थाने यद्दत्तं वृथादानं प्रकीर्तितम् ॥
आरूढपतिते दानं अन्यायोपार्जितञ्च यत्।
व्यर्थं मब्राह्मणे दानं पतिते तस्करेऽपि च ॥
गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके।
ब्रह्मबन्धौ च यद्दानं यद्दत्तं वृषलीपतौ ॥
विक्रयिणो चैव यस्य चोपपतिर्गृहे।

स्त्रीजिते चैव यद्दत्तं व्याजग्राहे तथैव च ॥
परिचारके तु यद्दत्तं वृथा दानानि षोडश।
तमोवृत्तश्च यो दद्याद्भयात् क्रोधात्तथैव च ॥
विप्रवृत्तं हि तत्सर्वं भुङ्क्ते गर्भस्थ एव हि।
दूर्य्यया मन्युना दानं यद्दान मर्थकारणात् ॥
यो ददाति द्विजातिभ्यो बालाभावे तदश्नुते।
स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते ॥
अप्रमेयगुणं तद्धि उपतिष्ठति यौवने।
यत्सद्विप्राय वृद्धाय भक्त्या परमया वतु ॥
दीयते वेदविदुषे तदुपतिष्ठति वार्द्धके।
तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तम! ॥
दातव्यानि द्विजातिभ्यः स्वर्गमार्ग मभीप्सता।
भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणम् ॥
करे स्त्रियं तथा कन्यां दासदासी तथा द्विजः।
करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहः।
आरुह्य च गजस्योक्तकर्णस्याश्वः प्रकीर्तितः ॥
तथा चैकशफानाञ्च सर्वेषा मविशेषतः।
प्रतिगृह्णीत गां शृङ्गे पुच्छलग्नाजिनं तथा ॥
कर्णजाः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः।
प्रतिग्रहं तयोर्वृक्ष आरुह्यैव तु पादुके ॥
ईषायान्तु रथो ग्राह्यः छत्रं दण्डे तु धारयेत्।
द्रुमाणा मथ सर्वेषां मूले न्यस्तकरो भवेत्।
आयुधानि समादाय तथासुष्य विभूषणम्।
धर्मध्वज तथा स्पृष्ट्वा प्रविश्य च तथा गृहम् ॥

अवतीर्य तु सर्वाणि जलस्थानानि यानि तु।
उपविश्य च शय्यायां स्पर्शयित्वा करेण वा॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्।
कन्यादाने तु यं पठेद् द्रव्याणि तु पृथक् पृथक्॥
प्रतिग्रहं द्विजश्रेष्ठ! तथैवान्ते भवन्ति ते।
द्रव्याणामथ सर्वेषां द्रव्यसंश्रयणाक्षरः॥
वाचयेज्जलमादाय झङ्कारेण प्रतिग्रहम्।
प्रतिग्रहस्य यो धर्मं यो जानाति द्विजो विधिम्॥
सद्रव्यस्तेन्यसंयुक्तो नरकं प्रतिपद्यते।
अथापि वक्ष्यामि विधिं विशेषं वाजिदानतः॥
हातयशीतोरपि येन पुण्यं स्वर्गाय जायेत शृणुष्वमेतत्।
रह्णीत योऽश्वं विधिवद्द्विजेन्द्रः कुर्य्यादसौ पञ्चदिनानि पूर्वम्॥
शोपचारैर्युतविष्णुपूजां कृत्वाश्वमन्त्रैर्घृतदुग्धहोम।
द्राम इत्यादि गवत्तीयं सोङ्कारभूरादिभिरन्वितं च॥
त्येकमष्टौ जुहुयाद्विजाग्र्याः! तदा तथामानसयेद्विजेन्द्राः!।
र्येण मन्त्रेण च तद्वदष्टौ पश्चात् प्रयुक्तं नियतं जुहोति॥
र्याञ्च गायत्र्यजपं सहस्रं पश्चात्प्रयच्छन् सुरगं द्विजेन्द्रः।
तापि चैतद्व्रतमाविदध्याद्द्विजाग्र्यवत्त्राह्मनयोर्विशुद्धे।
यम् स्वर्गं जनं लभेते यत्रापि पूज्यौ द्विजवृन्दमध्ये॥

अश्वप्रतिग्रहविधिः।

पुराणगीता सु भवन्ति गाथा विशिष्ट पुण्यप्रतिपादनाय।
तियो प्रदत्तं द्विज! यत्र पूर्वं क्रमेण चैतं पुनरच्यतां तु॥
श्रावणे शुक्लपक्षे तु द्वादश्यां दीयते द्विज!।
गोप्रदानेन गोविन्दो वन्दत्येतन्मनीषिणः॥

पक्षे शुक्ले तथा वत्स ! द्वादश्यां घृतधेनुकाम् ।
घृतार्चिः प्रणमायाशं प्रदद्यात् फलदायिनीम् ॥
तथैव माघद्वादश्यां प्रदत्ता तिलगौर्द्विज ! ।
केशवं प्रीणयन्त्याशु सर्वान् कामान् प्रयच्छति ।
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम् ।
दत्त्वा विप्राय विधिना प्रीणयन्त्यम्बुशायिनम् ॥
यत्र वा तत्र वा काले यदा तदा प्रदीयते ।
विशेषार्थमिदं प्रोक्तं नान्यत्काले निषेधनम् ॥
विष्णुमुद्दिश्य विप्रेभ्यो निःस्वेभ्यो यत् प्रदीयते ।
भवेत्तदक्षयं दानं उक्तमल्पाक्षरैरिदम् ॥
काले पात्रे तथा देशधनं न्यायार्जितं तथा ।
यद्दत्तं ब्राह्मणश्रेष्ठे तदनन्तं प्रकीर्तितम् ॥
चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे ।
पक्षक्षं कथितं सर्वं तदप्यर्के विशिष्यते ।
द्वादशी पुण्यशुक्लासु विशेषाच्छ्रवणेन तु ॥
यत्र प्रदीयते किञ्चित्तदनन्तं द्विजोत्तम ! ।
वैशाखे शुक्लपक्षे तु विशेषादपि मानवः ॥
आषाढी कार्त्तिकी चैव फाल्गुणी तु विशेषतः ।
तिस्रश्चैताः पौर्णमास्यो दाने विप्र ! महाफलाः ॥
व्यतीपातेषु सर्वेषु समर्त्तेषु द्विजोत्तम ! ।
ग्रहसंक्रमकाले तु तीव्ररश्मे विशेषतः ॥
तुला मेषप्रयाणेषु योगेषु मिथुनस्य च ।
रेवेर्महाफलं दानमल्पेभ्योऽपि स्यान्महाफलम् ॥
यदा प्रविशति भानु मकरं द्विजसत्तम ! ।

आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥
द्वादशीसहितं प्रोक्तं पुण्यं दिनचतुष्टयम्।
मिथुनञ्च तथा कन्यां धन्विनं मीनमेव च॥
प्रविष्टे भास्करे पुण्यं कथितं द्विजसत्तम!।
षडशीतिमुखं नाम दाने दिनचतुष्टयम् ॥
अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तम!।
संस्कारे चैव पुत्रस्य तदक्षय्यं प्रकीर्तितम् ॥
एताश्च विविधाः प्रोक्ताः स्वाश्च कार्य्या यथोदितम्।
सर्वास्वपिहि सद्भिश्चैरित्थं धर्म्मं मभीप्सुभिः॥
सत्यञ्च नैधिद्विज नालकश्चि मिद्धयर्थमुक्तानि क्रियन्ति विप्राः!।
दानानि वक्षास्यथ पूर्त्तधर्मं माघेन पुंसोऽर्विहितेन धर्मः।
ब्रह्मेशहरिसूर्याणां स्कन्दे भास्याश्विने तथा।
इन्द्रदुर्गागणानाञ्च गृहाणि कारयेन्नरः॥
इष्टकामयतं वापि यश्चार्पयति विष्णवे।
अनेन विधिना कुर्यात् विष्णुलोक मवाप्नुयात् ॥
एवं यः सर्वदेवानां मन्दिरं कारयेन्नरः।
स याति वैष्णवं लोकं परितुष्टो हरिर्नरः॥
समाचरति यो भग्नं सुधया लेपयेद्यथा।
शुभ्रं पतिश्च यस्तन्तु विशिष्टैर्देवलेपनैः॥
सम्मार्जयति यस्तन्तु यथाचैवानुलेपयेत्।
प्रदीपन्तत्र योदद्यात् स याति विष्णुलोकताम् ॥
पूजयेद्यस्तु विधिना दशोपचारसंयुतः।
स विष्णुलोकमभ्येति क्रीड़ते च चतुर्भुजे ॥
यावत्तत् श्रेष्ठिकास्तत्र वित्तदैस्य सद्मनि।

ताऽन्त्यब्दसहस्राणि विष्णुलोकं समाविशेत् ॥
स नित्यन्तत्तडागानि पुष्करिण्यश्च दीर्घिकाः ।
तथा कूपाश्च कर्त्तव्या वाप्यश्च स्वकर्मेषिभिः ॥
खातमात्रश्च कर्त्तव्यं एकादिकजलं नरैः ।
यावत्पीत्वा जलं गौस्तु तृषार्त्तापि तृप्ती भवेत् ॥
पिबन्ति सर्वसत्वानि तृषार्ता अम्भसामिव ।
गण्डूषानि तु तावन्ति तत्कर्ता तत्समन्दिवि ॥
यावन्ति ह्युपकुर्वन्ति गण्डूषानि क्रियातु च ।
कुर्वतां स्नानशौचादि यावदाचमनं तथा ॥
तावत्संख्यानि वर्षाणि लक्षाणि दिवि मोदते ।
अथ स च विशेत् स्वर्गे सेव्यमानोऽप्सरोगणैः ॥
आरामाश्चापि कर्त्तव्याः शुभश्चैः सुशोभितैः ।
अश्वत्थोदुम्बरश्लक्ष्णचूतनागादनीवरैः ॥
जम्बूनिम्बकदम्बैश्च खर्ज्जूरैर्नारिकेलकैः ।
वकुलैश्चम्पकैश्चैव पाटलाशोककिंशुकैः ।
द्रुमैर्नानाविधैरन्यैः फलपुष्पोपयोगिभिः ॥
जातीकुपादिपुष्पैस्तु शोभिताश्च समन्ततः ।
फलोपयोगिनः सर्वे तथा पुष्पोपयोगिनः ॥
आरामेषु च कर्त्तव्याः पितृदेवोपयोगदाः ।
गाथामुदाहरन्त्यत्र तद्विदः कवयोऽपरे ॥
वृक्षारोपणकं पुंसा मुक्ता याः पुण्यवाचकाः ।
अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशचिञ्चिणीश्च
षट् चम्पकं तालशतत्रयं च पञ्चाम्रवृक्षैर्नरकं न पश्

यावन्ति खादन्ति फलानि वृक्षा: सुदक्षिदग्धस्य तु मानुषाणाम् ।
वर्षाणि तावन्ति वसन्ति नाके वृक्षोपकर्त्ता पुरुषा: स्वमरौघसेव्या: ॥
पुष्पाणि यावन्ति च पुष्पिणां तु दिवौकसां मूर्ध्नि धरातले वा ।
पतन्ति तावन्ति च वत्सराणां कल्याणि वृक्षैर्दिवमारुहन्ति ॥
तत्कालपक्वैर्मधुरैरच्छ शाखाच्युतै: स्वादुफलैर्नगाद्या: ।
वर्षाणि हस्तानि समर्पयस्व तत्सात्त्वदानेन च वृत्तनाथान् ॥
उद्दिश्य विष्णुं जगतामधीशं नारायणं यत्पुरुष: करोति ।
आनन्त्यमाप्नोति कृतं तु तस्मादनन्ततोयं भगवान् पुराण: ॥
दानानि सर्वाण्यभिधाय विद्वन् ! नष्टस्य पूर्तं स्वहमेधिकर्म ।
कुर्वन्ति शान्तिं मनुजा: शुभाय वक्ष्यामि तत्स्यादयमर्वशान्त्यै ॥
उक्तानि सर्वदानानि इष्टापूर्तञ्च सत्तमा: ! ।
अत:परं प्रवक्ष्यामि गणेशादिकशान्तय: ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रणीतायां
धर्मसंहितायां दानधर्मेषु पूर्त्तविनिर्णयो
नामाष्टमोऽध्याय: ॥

---

## नवमोऽध्याय: ।

शान्तीनामथ सर्वासां ग्रहशान्ति: परा स्मृता ।
ग्रहेभ्योऽपि गणेशस्तु तस्य शान्तिरथोच्यते ॥
यदि पुंस्कृतकर्माणि भवन्ति फलदानि हि ।
तदा धर्मार्थकामाप्तु संसिध्येरन् सदा नृणाम् ॥
तन्नृभि: क्रियमाणानां सर्वेषां कर्मणामयम् ।
विघ्नार्थमसृजद्ब्रह्मा शङ्करश्च विनायकम् ॥

तेनोपहतपुंसान्तु कर्म स्यान्निष्फलं कृतम्।
स्त्रीणामपि तथा सर्वं क्रियमाणन्तु निष्फलम्॥
जलावगाहनं स्वेन क्रव्यादारोहणं तथा।
खराष्ट्रम्लेच्छसंसर्गं गुडकाषायवाससम्॥
पश्यत्यात्मानमेवेह सीदन्तं प्रतिवासरम्।
यानि कर्माणि कुर्वीत तानि स्युः क्लेशदानि हि।
राजपुत्रो न राज्याप्ता यद्याप्ता न तु कन्यका।
अन्तर्वर्त्तिन्यपत्याप्ता आचार्ये तु न सा द्विज!॥
अधीयानास्तु विद्याप्ता कृषिकृत्सस्यसम्पदा।
वणिग्वर्त्तन लाभेन युज्यन्ते तद्वतस्य सन्॥
तस्मात्तदुपायन्त्यर्थं समभ्यर्च्य गणेश्वरम्।
स्नपनङ्कारयेत्तस्य विधिवत्पुण्यवासरे॥
स्वासनासीन संस्नाप्य आरक्तार्षभचर्मणि।
सितसर्षपकल्केन साज्येनाच्छादितस्य च॥
विलिप्त शिरसस्तस्य गन्धैः सर्वैस्तथौषधैः।
अष्टौ वा चतुरो वापि स्वस्ति वाच्यं द्विजान् शुभान्॥
एकवर्णैश्चतुर्भिश्च पुम्भिः कुम्भैश्च यज्जलम्।
समानीतं क्षिपेत्तत्र वक्ष्यमाणस्तदंस्त्विमाः॥
अश्वेभस्थानवल्मीके ह्रदसङ्गमवर्त्तिका।
रोचनां गुग्गुलं गन्धान् तस्मिनम्भसि तान् क्षिपेत्॥
यत्ते हैपायनं स्नानं सहस्राक्ष ऋषिस्मृतम्।
तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः॥
नचाभिः पावमानीभिः कुम्भन्तमभिमन्त्रयेत्।
शक्रादिदशदिक्पाला ब्रह्मेशकेशवादयः॥

आपस्ते घ्नन्तु दौर्भाग्यं शान्तिं ददतु सर्वदा।
सुचिविधान इत्यादौ मन्त्रैर्नैकाभिषेचनम् ॥
वदन्ति वदतां श्रेष्ठाः दौर्भाग्यस्योपशान्तये।
समुद्रा गिरयो नद्यो मुनयश्च पतिव्रता ॥
दौर्भाग्यं घ्नन्तु मे सर्वे शान्तिं यच्छन्तु सर्वदा।
पादजङ्घोरुजङ्घाश्च सितस्त्रोदरनाभिषु ॥
स्तनांसे बाहुहस्ताग्रग्रीवा ऽंसाङ्गसन्धिषु।
नासा ललाटे कर्णभ्रू केशान्तेषु च यत् स्थितम् ॥
तदपो घ्नन्तु दौर्भाग्यं शान्तिं यच्छन्तु सर्वदा।
स्नातस्य मस्तके दर्भान् सव्येन परिमृश्यते ॥
जुहुयात् सर्षपस्तैलमौदुम्बरस्रुवेण तत्।
मितश्च संमितश्चैव तथा सालकटङ्कटौ ॥
कूष्माण्डो राजपुत्रश्चेत्यन्तस्वाहा समन्वितैः।
नामभिश्च बलिं दद्यान्मन्त्रैर्नाम स्वधान्वितैः ॥
चतुष्पथं समाश्रित्य सूर्प्ये कृत्वा कुशांस्ततः।
निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान् ॥
ओदनं पललोपेतं मत्स्यामान् मत्स्यकानपि।
तथा मांसञ्च कुल्मापान् तत्रैव विविधां सुराम्।
पूरिकेण्डेरिकान् पूपान् फलानि मूलसंस्रजः ॥
गच्छेत् स मातुः पार्वत्याः कुर्यादुपस्थितं पुनः।
दूर्वासर्षपपुष्पैश्च पूर्णमार्घाञ्जलिं क्षिपेत् ॥
सौभाग्य अम्बिके! देहि भगरूपं यशोऽपि च।
श्रियो पुत्रांश्च कामांश्च तथा शौर्यञ्च देहि मे ॥
गणेशमातः! रम्बाले! यत्किञ्चिन्मदभीप्सितम्।

एतश्चाम्बे ! च महेशि देवि गौरि ! वरान् वरान् ॥
धनस्तु वाससी शुक्ले परिधायाथ ते शुभे ।
सितचन्दनलिप्ताङ्गः सितस्रग्भूषणान्वितः ॥
तान् नत्वाथ द्विजान् सर्वान् भोजयेद्विविधाशनैः ।
वस्त्रयुग्मं गुरोर्दद्यात्तेतु तस्य वराशिषः ॥
एतानि सम्पूज्य गणाधिदेवं विघ्नोपशान्त्यै जननी तथास्य ।
स्मार्त्तोक्तसम्यग्विधिना समासात्प्राप्नोति चान्यान्मनसा यमिच्छेत्
स्नात्वा विधायार्चनमम्बिकायाः सम्पूज्य लोकान् सखिबन्धुलोकान्
आचार्यहृष्टाम्बनिताकुमारी प्रध्वस्तविघ्नः श्रियमेति गुर्वीम् ॥
स्मृत्युक्तमन्त्रैर्विधिवच्च युक्तै र्नित्यं द्विजानन्दनपूजनं च ।
कृतान्तरायान्विनिहत्य सर्वान् कुर्याद्यथातो ग्रहयागमेनम् ॥
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे शान्त्यध्याये विनायकशान्तिः सम्पूर्णा ॥

---

मुनीनां व्यासमुख्यानां शुश्रूषागुपुरोऽब्रवीत् ।
शुभाय ग्रहपूजायां वदतस्तानि बोधत ॥
यद्वर्णा यत्सुतान्विद्वान् जाता देशेषु येषु च ।
तेषां तदधिदैवत्यं सन्निधौ दक्षिणाय च ॥
यस्य यस्य च दिग्भागे मण्डलं स्याद्विवस्वतः ।
होमकर्मणि यो विप्रो या सम्या समिधावपि ।
अग्निकुण्डप्रमाणं तु प्रमाणं समिधामपि ॥
सर्वमेव यथोद्देशं वक्ष्यामि द्विजसत्तम ! ।
रक्तः काश्यपजो भानुः शुक्लो मधुसुतः शशी ॥
रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः ।

पीतो ब्रह्मा सुराचार्य्यः शुक्लः शुक्रो भृगूद्भवः ॥
कृष्णः शनीरवेः पुत्रः कृष्णो राहुः प्रजापतिः।
कृष्णः केतुः शमानुच कृष्णपापाश्रयोऽधमी ॥
कालगोऽयं पुनः सोम आवन्त्यः सोम उच्यते।
मागधो बुधइत्युक्तो गौतमस्तु बृहस्पतिः ॥
सैन्धवोदानवाचार्यसौरिसौराष्ट्रदेशजः।
राहुशककुलदेशीत्थो मध्यदेशभवोऽग्निभूः ॥
जन्मदेश इमे प्रोक्ताः ग्रहजातक वेत्तृभिः।
शम्भुं रविं पुमान् चन्द्रं स्कन्धभौमं हरिं बुधम् ॥
ब्राह्मणञ्च गुरुं विद्याच्छुक्रं शुक्रं यमं शनिम्।
कालं राहुं चित्रगुप्तं केतु मित्यधिदैवतम् ॥
एतद्विज्ञाय यत्कुर्य्यात्तत्सर्वं सफलं भवेत्।
अर्कस्त्वर्काय होतव्यः सर्वव्याधिप्रणाशनः ॥
सुधामुचे च सोमाय पालाशः सर्वकामिकः।
खदिरश्चार्थलाभाय मङ्गलाय विवेकिभिः ॥
स्वरूपज्ञरपामार्गो होतव्यश्च बुधाय च।
प्रभाप्रदस्तथाश्वत्थो होतव्योऽमरमन्त्रिणे ॥
शमी सौभाग्यजुष्टेया दैत्यामात्याय सद्विज !।
धर्मविद्यार्थलब्धभान् स द्विजो वह्निसूनवे ॥
दधिक्षीराज्यसंमिश्राः समिधः शुभवृद्धये।
शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने ॥
दीर्घायुर्धर्मकृद्दूर्वा होतव्या राहवे द्विज !।
प्रादेशमात्रका सर्वा अष्टा वष्टोत्तरं शतम् ॥
अष्टाविंशतिरेकैका सङ्ख्यैषा प्रतिदैवतम्।

दद्यात्तु बलभूयश्च सुताइत्यत राक्षसम्॥
नव भुवनके लेख्यं चतस्रं मण्डलं द्विज!।
ग्रहांस्तत्र प्रतिष्ठाप्य वक्ष्यमाणक्रमेण तु।
मध्ये तु भास्करः स्थाप्य पूर्वदक्षिणतः शशी।
दक्षिणेन धरासूनुं बुधः पूर्वोत्तरेण तु॥
उत्तरस्यां सुराचार्यः पूर्वस्यां भृगुनन्दनः।
पश्चिमायां शनिः कुर्य्यात् राहुर्दक्षिणपश्चिमे॥
पश्चिमोत्तरतः केतुरिति स्थाप्याः ग्रहाः क्रमात्।
पटे वा मण्डले लेख्या ईशान्यां दिशि पावकान्॥
भास्करः स्फाटिकश्चन्द्रो रक्तचन्दनकोऽपरः।
सोमसूनु सुराचार्य्यौ स्वर्णशोभौ प्रकीर्तितौ॥
रजतो भृगुपुत्रस्य कार्य्यश्च स शनैश्चरः।
राहुश्च सैसकः कार्यः कार्यः केतुश्च कांस्यकः॥
सर्वानेतन्मया कृत्वा समभ्यर्च्य सदा ग्रही।
लेखयेद्वर्णकैः स्वैः स्वैर्विधिवत्पीठकेन वा॥
ग्रहाणां साधिदेवानां प्रतिष्ठापन मन्त्रकान्।
वदन्ति मन्त्रतत्त्वार्थवेदिनो द्विजसत्तम!॥
आदित्यं गर्भमित्युक्त मग्निं दूतमनेन वा।
एताभ्यां स्थापयेदर्कं त्र्यम्बकम् इति शङ्करम्॥
अप्स्वन्तरीति शीतांशुः श्रीश्च त इति पार्वती।
स्योना पृथ्वीति भौमश्च य इन्द्रं देति वा गुहम्॥
इदं विष्णु बुधः स्थाप्य तद्विष्णोरिति वै हरिम्।
इन्द्र आसां सुराचार्य्य ब्रह्मजज्ञानां निबोधकम्॥
इन्द्र देवी भृगोः सूनुं सर्वंचेत्यमराधिपम्।

शन्नो देवी रवेः सूनुं यमाय त्वा तथा यमम् ॥
अयं गौरिति राहुञ्च कालं कार्षीरमीति च ।
ब्रह्मजज्ञेति केतुञ्च चित्रं चित्रावसोरिति ॥
ब्रूयुरेतानि मन्त्राणि मूलमन्त्राणि चापरे ।
आकृष्टेन च तीव्रांशोरिमन्देवा निशाकरम् ॥
अग्निमूर्द्धेति भूसूनोरुद्बुध्यस्व बुधस्य च ।
बृहस्पतेरिति गुरो रन्नात्परिस्रुतो भृगोः ॥
शन्नो देवी शनेर्गन्तुः काण्डात् काण्डात्परस्य च ।
केतुं कृण्वन्नग्निसूनुरयमंशः प्रकीर्त्तितः ॥
वेदमन्त्रैः सदा पूज्या विधिना ते द्विजन्मना ।
कर्त्तव्याश्चरवो मन्त्रैः स्वैः स्वैश्च प्रतिदैवतम् ॥
सघृता सयवाश्चापि होतव्याश्च द्विजैस्तिलाः ।
मध्यमानामिकामूललग्नाङ्गुष्ठं चतसृभिः ॥
यावन्तोऽङ्गुलिभिर्ग्रासा तिला स्यात्तत्तवाहुतिम् ।
हस्तमात्रं पृथिव्यां न वेधोऽपि तावतैव तु ॥
बाहुमात्रं वदन्त्येके एके चारत्निमात्रकम् ।
चतुरस्रं खनेत्कुण्डमेकयोनिसमन्वितम् ॥
शुभमेखलया युक्तं सुशान्तिकरमुत्तमम् ।
होमार्थं मण्डलं कुर्य्याच्चतुर्द्वारसमन्वितम् ॥
चतुर्दिक्षु ध्वजाः कार्या नानावर्णाः शुभावहाः ।
तथा तत्तोदकुम्भाश्च दूर्वापल्लवसंयुताः ॥
पुनर्नवीकृतं पद्मं मण्डपाभावमाश्रयेत् ।
षट्कर्मनिरताः शान्ता ये न दग्धाः प्रतिग्रहे ॥

नियोज्यास्तेऽग्निकार्यादौ स्फुरन्मन्त्रा द्विजोत्तमाः
प्रतिग्रहा निदग्धश्च जपहोमादि कुर्वतः ॥
यस्य मन्त्रास्त्ववीर्याणि तत्कृतं कर्म निष्फलम् ।
ओदनं सगुडं भानोः पायसं शशिन स्तथा ॥
हविष्यं भूमिपुत्रस्य क्षीरान्नञ्च बुधस्य च ।
पूर्णं हविः शनैः केतो र्मांषं राहोः हुताहुतम् ॥
चित्रान्नमग्निसूनोश्च भाज्यानामपि यस्य याः ।
होमं कृतस्तथान्येऽपि सद्दृष्टत्वाय द्विजाग्रजाः ॥
यथावर्णानि वासांसि देयानि कुसुमानि च ।
देया गन्धाय सर्वेषां देयो धूपश्च गुग्गुलः ॥
धेनुः शङ्खो वृषः स्वर्णं वासोऽश्वश्चासिता च गौः ।
आविस्कागलकश्चैव क्रमशो दक्षिणाः स्मृताः ॥
प्रत्यक्षं प्रतिमासञ्च प्रत्यब्दं वा विधानतः ।
वर्णिभिश्च ग्रहाः पूज्या राजभिस्तु सदैव हि ॥
दुःखितो यस्य यस्तु स्यात् पूज्यस्तस्य स यत्नतः ।
वेधसैते नियुक्ताः प्राक् स्वभक्तं पूजयिष्यथ ॥
वरं ददाति संहृष्टा विप्रा अग्नि र्नृपा ग्रहाः ।
असन्तुष्टा दहन्त्येते तस्मात्तानर्चयेत्सदा ॥
ग्रहाधीन मिदं सर्वं उत्पत्तिप्रलयात्मकम् ।
जगत्यभावभावौ च तस्मात्पूज्यतमा ग्रहाः ॥
सानुकूले ग्रहैर्यानि कुर्यात्कर्माणि मानवः ।
सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा ॥
कुर्वन्ति चैतद्विधिना ग्रहाणा मातिथ्यमब्दं प्रतिवासरं ये

आरोग्यदेहा धनधान्ययुक्ताः दीर्घायुषः स्वीयतगा भवन्ति ॥

इति श्रीवृद्धत्पाराशरीये धर्मशास्त्रे ग्रहशान्तिर्नाम नवमोऽध्यायः ।



वसेत्स कस्मात्सदनेष्वतोऽद्भुतं वयोवसेयुर्यदरण्यवासिनः ।
विशेषतो गृध्रकपोतपिङ्गलास्तथैव चोलूकसकाकवायसाः ॥

तरक्षुगोमायुखगायुगोभि-
र्हि धाप्यकस्मादकुतोऽपि निर्भयः ।
विशन्ति यत्स्वेतदतीव चाद्भुतम्
गृहे पुरे तच्छनिस्रुते हि सिद्धये ॥

अथाद्भुतानि जायन्ते वर्णानां गृहमेधिनाम् ।
नानाविधानि तेषान्तु प्रशान्त्यै शान्तिरिष्यते ॥
यस्याद्भुतानि जायन्ते गृहे तस्य समादिशेत् ।
धनधान्यक्षयो वापि पुत्रभार्य्याक्षयस्तथा ॥
भयञ्चा जायते शत्रो राज्ञो वा जायते भयम् ।
शान्तिस्तत्र विधातव्या यथोक्तं मुनिपुङ्गवैः ॥
यदि गोधूमशाखायां यवशाखोपजायते ।
यवगोधूमशाखाञ्च देवसर्वाशनेषु च ॥
सर्षपे तिलशाखा च तिले शाखासु सर्षपम् ।
माषे मुद्गस्तु मुख्ये स्यात् अहगृष्टिर्भवेद्यदि ॥
अम्भः पूर्णे तु कुम्भेतु ज्वलदग्निमवेक्षते ।
उद्वपनन्तु कूपानां मक्षो वा मधुजालकम् ।
विधिवद्वायुलिङ्गैश्च निर्वाप्य पायसं चरुम् ॥
महावाताय वाताय तद्वदयं प्रशाम्यतु ।

त्रिपञ्चसप्त वा कृत्वा सर्वत्र स्यात्र तुल्यता॥
स्त्रियो गौर्वा महिष्यावा सुतौ वत्सौ च पाण्डकौ।
द्वौ द्वावाशु प्रजायेते तत्र शान्तिर्विधीयते॥
वृषवज्जोहयं नर्दत् वडवाश्ववदाहरेत्।
अश्वतरी प्रसूते वा प्रस्वेदः प्रतिमासु च॥
मृदङ्गपटहादीनामकुतोऽपि ध्वनिर्यदा।
काकगृध्रकपोताद्याः प्रविशेयुर्गृहे पुरे॥
यवपिष्टेन निर्लिप्य विधिवद्वारुणं वरम्।
मन्त्रैर्वरुणदैवत्यै र्जुहुयाद्वरुणाय तम्॥
महावरुणदेवाय स्वपाञ्च पतये तथा।
अन्यैर्वरुणदैवत्यैर्मन्त्रैश्च जुहुयाच्चरुम्॥
विप्रस्तु जुहुयान्मन्त्रैरेतेन वरुणाय तम्।
अन्यस्य तुल्यतां कृत्वा स्वाहान्तैर्वरुणदैवतैः॥
इन्द्रचापेक्षणं रात्रौ शस्त्रप्रज्वलनन्तथा।
गजश्च शफवान्तु ज्वलनं प्रतिवीक्षणम्॥
स्थूणाप्ररोहणं यत् स्यान्छाण्डस्यानप्ररोहणम्।
विद्युन्निर्घातवज्राणां पतनं वा भवेद्यदि॥
मृदाकुङ्काकसंसर्गं विपरीतप्रदर्शनम्।
शमाय चरुराग्नेयो निर्वाप्यो विधिवद्दिजैः॥
अग्नये त्वग्निराजाय महावैश्वानराय च।
हृदये मम यस्त्वेतत्सर्वत्र च वदेद्बुधः॥
गृहशान्तिश्च सर्वत्र शनिपूजा तथैव च।
दक्षिणा सवृषा गौस्तु वस्त्रयुग्मं द्विजायते।

एतेषु चान्येष्वपि चाङ्गतेषु जातेषु सावित्रजपं सहस्रम्।
होमं विदध्यादपि विष्णुमन्त्रैर्ब्रह्मेशमन्त्रैरपिवा द्विजोत्तमैः॥

इति श्रीवृहत्पाराशरीये शान्त्यध्याये अद्भुतशान्तिः।

---

अभिधास्येऽथ रुद्राणां शान्तये गृहमेधिनाम्।
पञ्चानाञ्च विधानन्तु यत्कृतं हन्ति पातकम्॥
ब्राह्मणा विधिवत् स्नात्वा सर्वोपद्रवनाशनम्।
कुर्युर्विधानं रुद्राणां यजुर्विधाननिर्मितम्॥
इषेत्वादिषु मन्त्रेषु खं ब्रह्म तेषु या क्रिया।
दशप्रणवयुक्तेषु भूर्भुवःस्वरितीति च॥
आर्षञ्छन्दश्च दैवत्यं न्यासञ्च विनियोगतः।
पराशरोदितं वक्ष्ये शेषं मुनिविभाषितम्॥
मनोज्योतिरबोध्याग्निमूर्धानञ्च मर्माणि ते।
मानस्तोक इतिह्येतत्प्रथमं पञ्चकं स्मरेत्॥
याते रुद्रेति वु आयाशिरोऽस्मिन्महदर्णवे।
असंख्यातसहस्राणि ललाटे विन्यसेद्बुधः॥
चक्षुषोर्विन्यसेद्रुद्रेतु त्र्यम्बकञ्च यजामहे।
मानस्तोक इति ह्येतन्नासिकायां न्यसेद्बुधः॥
अवतत्य धनुर्वक्त्रे नीलग्रीवाय वा गले।
नस्त आयुध इत्येतत्स्मरे मन्त्रप्रकोष्ठके॥
विन्यसेद्दासुमन्त्रोऽयं ये तीर्थानिति हस्तयोः।
नमोऽस्तु किरिकेभ्यो वै हृदये मलनाशनम्॥
ताभ्यां विद्वान् न्यसेत् पातं नमो हिरण्यबाहवे।

शल्यमन्त्रस्तु संस्मार्य इमा रुद्राय इत्यपि ॥
मानो महान्तइत्योर्वौ एष ते रुद्रेतिशानुनो: ।
अवरुद्रमिति ह्येतज्जङ्घयोर्मन्त्रमुच्चरेत् ॥
कवचे मध्यमेतद्वै तदुपरिस्थित इति ।
नेत्रन्तु नीलग्रीवाय प्रमुञ्चन् मनोऽस्त्रकम् ॥
य एतावन्त एतेन विदध्युर्दिक् प्रबन्धनम् ।
ॐमितिच नमस्कारभवा च ते तत: पुन: ॥
रुद्रायेति विधानज्ञो दशाक्षरन्तदा न्यसेत् ।
प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकान्तरे ॥
मोकारन्तु ललाटे तु भकारं मुखमध्यत: ।
गकारं कण्ठदेशेतु वकारं हृदये न्यसेत् ॥
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ।
द्राकारं नाभिदेशेतु यकारं पादयोर्न्यसेत् ॥
त्रातारमिन्द्रं त्वन्त्वाग्ने सुगन्ध: पन्थानमिति ह्यपि ।
तत्त्वा यामि वदेदानो नियुद्भिरित्यपीरयेत् ॥
वयं सोम तमीशानं अस्मेरुद्रा इति स्मरेत् ।
स्योना पृथिवी ह्येतत् कुर्वीत संपुटं द्विज: ।
भुवामादिदिशांपालान् प्राच्यादिषु स्मरेदथ ॥
रौद्रीकरणमेतद्वै कृत्वा पापै: प्रमुच्यते ।
यक्षरक्ष:पिशाचाद्या: प्रेतभूतग्रहादिका: ॥
दुष्टदैत्याश्च शाकिन्यो रेवत्यो वृद्धकाश्च या: ।
सिंहव्याघ्रादयोऽरण्या ये दुष्टश्वापदस्तथा निजा: ॥
म्लेच्छवञ्चकचोराद्या यमदूतस्तदाकव: ।
रौद्रभूतमिमं सर्वे द्विजं पश्यन्ति वह्निवत् ॥

देदीप्यमानमर्चिर्भिर्दुष्टदृग्वधकारकः ।
दह्यमानो दवीयः सु सप्तधामसु धामभिः ॥
प्रणश्यन्ति हि ये दुष्टा द्विजास्ते रुद्ररूपिणः ।
पश्चात्स्मरीश्यमात्मानं सर्वाभरणभूषितम् ॥
मृगलाञ्छनमूर्धानं शुद्धस्फटिकसन्निभम् ।
फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनम् ॥
सप्तार्चिषं ज्वलज्ज्वालं जटाजूटकिरीटिनम् ।
सहस्रकरपादाब्जखट्वाङ्गाङ्गविभूषितम् ॥
ब्रह्माण्डखाण्डवकारं नृकपालकधारिणम् ।
देदीप्यमानश्चन्द्रार्कज्वलदग्नित्रिनेत्रिणम् ॥
त्रैलोक्यज्योतिः कङ्कालस्त्स्कान्धकपालमालिनम् ।
दीप्तनक्षत्रमालाभदक्षमल्लाधरद्विजः ॥
निःशेषवारिसम्पूर्णां कमण्डलुधरं ध्वजम् ।
जगत्व्याधियकन्नादण्डमेरुकधारिणम् ॥
केयूरबद्धनागेन्द्रमूर्धमणि विराजितम् ।
विचित्र किङ्किणीं मालां मुक्ताराव विराजितम् ॥
घर्घराव्यक्तनिर्गच्छद्गभीरारावनूपुरम् ।
सहेमपट्टनीं लाभ व्याघ्रचर्मोत्तरीयकम् ॥
विद्युल्लताप्रभागङ्गं शुभ्रमूर्धसुरार्चितम् ।
समस्त भुवनाभाव धरणोच्छासनस्थितम् ॥
त्रैलोक्यवनितामूर्धानं तद्देहार्धञ्च पार्वतीम् ।
लक्षसूर्यप्रभाभास्वत् त्रैलोक्यकृतपाण्डुरम् ॥
अमृतप्लुत कृष्टाङ्गं दिव्यभोगसमाकुलम् ।
दिग्दैवतैः समायुक्तं सुरासुरनमस्कृतम् ।

नित्यं शाश्वतमव्यक्तं व्यापिनं नन्दिनं ध्रुवम् ॥
द्विजो ध्यात्वा भवात्मानं सम्यक् ग्रहस्वरूपिणम् ।
सम्प्रपद्यस्वान्तरायः सन्ततीयजनमारभेत् ॥
अनुलिप्ते सुगुप्ते च देशे गोचर्ममात्रके ।
स्थण्डिलाम्बुजमालिख्य मन्त्रैः प्रक्षाल्य तं पुनः ॥
तत्र पूजादिकं कुर्यान्नमश्च शाम्भवाय च ।
मानो महान्त इति च सिद्धमन्त्रं स्मरेद्द्विजः ।
स ललाटे पुनर्ध्यात्वा तेजोरूपं पुनर्द्विजः ।
दशाक्षरेण मन्त्रेण दद्यात्पाद्यादिकौ पुनः ॥
न्याममन्त्रैश्च सोङ्कारैर्मानस्तोक इति स्त्रपि ।
शम्भवे इति मन्त्रेण दद्याद्गन्धोदकादिकम् ॥
पुष्पधूपञ्च दीपादि यथालाभं निवेदिकम् ।
दशाक्षरेण तेनैव ततः कुर्यात् पुनर्द्विजः ॥
शिखा तस्य तु रुद्रस्योत्तरनारायणं द्विजः ।
शिरः पुरुषसूक्तञ्च शिवसङ्कल्पहृद्यकृत् ॥
कवचञ्चाप्रतिरथ नेत्रविभ्राट् बृहत्पिवन् ।
शतरुद्रीयमन्त्रेण देवस्यास्त्रं प्रकल्पयेत् ॥
पञ्चाङ्गानि स्मरेदष्टप्रणवं पूजयेद्द्विजः ।
उद्धृत्य प्रणवेनेशं विकिरन्द्रेति विसर्जयेत् ॥
रुद्ररूपी द्विजो यश्च कुर्यात्तद्विच सिध्यति ।
अक्षतान्वा तिलान्वापि यवान्वा समिधोऽपि वा ॥
शम्भवे इति जुहुयात् सर्वांस्तानाज्यसिक्तकान् ।
पञ्चपञ्चाथ षड्वाथ अष्टावष्टौ तथापि च ॥
दशदशैकादश वा जुहुयात्साधको द्विजः ।

द्विजः स्वदारसन्तुष्टः शुचिः स्नातो जितेन्द्रियः॥
जपतर्पणहोमादौ रतो यो वत्सरं जपेत्।
दशानामश्वमेधानां फलं प्राप्नोति वै द्विजः॥
सौवर्णपृथिवीदानपुण्यभावः प्रजायते।
महापापोपपापैश्च मुक्तो रुद्रत्वमृच्छति॥
एकादशगणान् रुद्रानावर्त्य याति रुद्रताम्।
रुद्रजापी शुचिः पुण्यः पाङ्क्तेयः श्राद्धभुग्वरः॥
वंशानां विंशतिश्चैकान्तारयेद्रुद्रजाप्यकृत्।
एकतो योगिनः सर्वे ज्ञातिभिः सह सव्रतैः॥
एकतो रुद्रजापी तु मान्यः सर्वेश्च दैवतैः।
पात्रमत्र पवित्रञ्च नाधिकं रुद्रजापिनः॥
तस्मै दत्तं कृतम्भुक्तन्तदानन्त्याय कल्पते।
अथातः सिद्धिकामः सन् कन्दमूलफलाशनः॥
गोमूत्रयावकक्षीरदधिशाकान्नभोजनः।
हविष्यभोजनो वाश्नौ विप्रायोत्पन्नभोजनः॥
जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत्।
शिरः साङ्गञ्च रुद्राणां जपैर्दशशतैर्ध्रुवम्॥
सर्वे मन्त्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिणः।
सिद्धमन्त्रा भवन्त्यस्य चिन्तितार्थफलप्रदाः॥
रुद्रस्यैवास्य सर्वे ते भवन्तीश्वरनोदिताः।
एकादश शुभान् कुम्भानाहृत्य विधिमन्त्रितान्॥
सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान्।
गन्धोदकाद्यैर्युक्तान्नमस्कृत्वाऽभिमन्त्र्य च।
एकादशमहात्मान मन्त्रं वा हितकाम्यया।

विनायकोपसृष्टश्च स्नापयेत् का पदाहृतम् ॥
मृतवत्सां काकवन्ध्यां स्नापयेच्च तथातुराम् ।
जपन्नेतच्च रुद्रं विप्रः सर्वदोषैर्विमुच्यते ॥
अनड्वाहञ्च वस्त्रञ्च दद्याद्धेनुञ्च दक्षिणाम् ।
भोजयेद्विदुषो विप्रान् समाप्तौ कर्मणो द्विजः ॥
भक्त्यैकादशवस्त्राद्यैर्यथाशक्त्या समर्चयेत् ।
अथवा चतुभिः मासौ शिरो रुद्रसहस्रकम् ॥
जपेद्गोष्ठे तथारण्ये निर्झरे च शिवालये ।
अग्न्यागारे समुद्रे च नदीनिर्झरपर्वते ॥
जपेदन्यत्र वा विद्वान् शुचौ देशे मनोरमे ।
धीरो दृढव्रतो मौनी जितक्रोधो जितेन्द्रियः ॥
श्वेतवासास्त्वधःशायी रुद्रलोके महीयते ।
नमो गणेभ्य इत्यस्य मन्त्रस्य ब्राह्मणोऽयुतम् ।
जप्त्वा च श्रीफले हुत्वा सर्वकार्य्ये तु सिद्धिभाक् ।
नमोऽस्तु नीलग्रीवायेत्येतन्मन्त्रेण सप्तधा ॥
आवर्त्त्योदकमामन्त्र्य विषार्त्तश्रवणे जपेत् ।
विविषो मुच्यते सद्यः काकदष्टोऽपि जीवति ॥
विषस्यापि भवेन्न स्यात्तस्य नरस्य कर्हिचित् ।
ग्रहग्रस्तं ज्वरग्रस्तं रक्षःशाकिनि दूषितम् ॥
ब्रह्मराक्षसग्रस्तञ्च अन्यदोषोपदंहितम् ।
प्रमुञ्चन् धन्विन इति भस्मना सर्षपैस्तथा ।
ताडयेन्मुञ्च मुञ्चेति शीघ्रमेव विमुञ्चति ॥
नमः शम्भव इत्यस्य मन्त्रस्यापशुभं द्विजः ।
जप्त्वा खादिरसमिद्भाश्च हुत्वा विप्रः सहस्रकम्

तीक्ष्णतैलप्लुतं सम्यक् मन्त्रान्ते मोचनम् ऋम् ।
फट्कारेण च जुहुयात् तयोरेवाचिराद्भवेत् ॥
जलमध्ये शतावर्त्त्या सद्योवृष्टिर्निगद्यते ॥
नाभिमात्रे जले विप्रः प्रविश्य जुहुयाज्जलम् ।
कुर्यादेकार्णवां धात्रीं मन्त्रमाहात्म्यतो भृशम् ॥
नमः स्वभ्य इत्यनेन मन्त्रेण तु सहस्रकम् ।
लवणं मध्वाहुतीनान्तु राजा शीघ्रं वशी भवेत् ॥
द्विगुणाम्पलाशसमिधं महावाणी प्रजायते ।
त्रिगुणां नवपद्मानां पाताले सिद्ध्यति ध्रुवम् ॥
चतुर्गुणेन मन्त्रेण वरदा श्रीः प्रजायते ।
समुद्रगा नदीतीरे पुलिने वा पवित्रके ॥
खड्गोपरि श्रीफलानां हुत्वा त्रिगुणसहस्रकम् ।
अणिमादिकसिद्धीनामेभिरेव भवेद्द्विजः ॥
छन्दोदैवतमार्षेयमथातः शतरुद्रिये ।
ज्ञानेन कर्मसम्पन्नं द्विजानां येन जायते ॥
आद्यानुवाके रुद्राणां आद्यायाश्च कचिद्द्विजः ।
छन्दोगायत्र्यमन्यास्तु अनुष्टुप्तिसृषु स्मरेत् ॥
पङ्क्तिस्तिसृषु विज्ञेया अनुष्टुप् तिसृषु स्मृताः ।
द्वयोश्च जगती विप्र उक्तमद्यानुवाककम् ॥
आद्यानुवाके प्रथमा बृहती जगती तथा ।
अनुष्टुप्च तृतीयायां द्वयोस्त्रिष्टुप् स्मृता द्विज ! ॥
अपरासु तथाऽनुष्टुप्सु अनुवाकद्वयं स्मृतम् ।
रुद्रः सर्वासु देवत्वं विनियोगो यथोचितः ॥
यज्जाग्रतादि षट्केच शिवसंकल्पमार्षकम् ।

रुद्रस्तु देवता षट्सु विनियोगो जपादिषु ॥
अद्भ्यः सम्भृत इत्यादौ उत्तरनारायणर्षिपिः ।
पूर्वानुवाके दैवत्यं अनुष्टुप्छन्दः प्रकीर्तितम् ॥
आशु शिशान इत्यादिरप्रीतिरथ उच्यते ।
एतन्नाम्ना मुनिस्तत्र देवतारामरेश्वरः ॥
दैवत्यमापतित् स्यात छन्दस्त्रिष्टुप् प्रकीर्तितः ।
विभ्राट् बृहदित्यादौ सूर्यो दैवतमुच्यते ॥
एतत्सङ्चिन्त्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत् ।
यद्यदारभते तत्तद्यथोक्तफलदम्भवेत् ॥
तदा ध्यायन् यन्त्रिणां स्नानान्द्विशास्त्र च ।
प्रजानामायुषः कीर्तिर्भूयस्त्वं रुद्रजापिनः ॥
इमं पुण्यं पवित्रञ्च रहस्यं पापनाशनम् ।
रुद्रविधिं विधिश्रेष्ठ ! कुर्याद्विप्रः शिवे रतः ॥

कुर्याद्य एवं विधिवद्विधानं गम्भीरजप्यान्वयितं द्विजेन्द्राः ।
प्राप्नोति नाकं स शिवस्य साक्षादत्रापि स स्याच्छिववल्लभः ।
मन्त्राणि सर्वाणि च स द्विजस्य स्यादेशकर्तॄणि भवन्ति यः ।
यः साधयेत्प्रोक्तविधानयत्नो मन्त्राभिपूज्यः स तु शम्भुवत्स्यात् ।
इति श्रीबृहत्पाराशरीये शान्त्यध्याये रुद्रशान्तिः समाप्ता

---

मन्त्रन्त्विमेतं जुहुयाद्धुताशे यो बिल्वपत्रैर्घृतदुग्धयुक्तैः ।
मृत्युञ्च हत्वा श्रियमेव ध्यात्वा प्राप्नोति पश्चाच्छिवलोकम् ।
पञ्चभागास्तथा पञ्च पञ्चेन्द्राः पञ्चवारुणम् ।
पञ्चाहुतीर्जपित्वाथ सर्वपापैः प्रमुच्यते ॥

अथातः सम्प्रवक्ष्यामि तटागेष्टिविधिं शुभम्।
येन कृतेन तेषान्तु प्रतिष्ठा सा प्रजायते॥
अश्मात्तातस्य तातेन पृच्छति रघुपुङ्गवे।
तटागाद्युत्सवविधिः प्रोक्तो सोऽयं प्रकीर्त्तितः॥
दीर्घिकासु तटागेषु सन्निहितासु यो विधिः।
वशिष्ठः प्रोक्तवान् सम्यक् दशरथस्य पृच्छतः॥
तस्माद्यः श्रुतवान् शक्तिसूनवेऽतः पराशरः।
तत्प्रसादेन तत्प्रोक्तो योविधिः संप्रचक्षते॥
तटागादिनिपातानां यावदुत्सर्जनं कृतम्॥
तावन्न परकीयन्तु स्नानादीनामनर्हकम्।
अप्रतिष्ठितदेवानां न कार्यं पूजनं यथा॥
अप्रतिष्ठितपाथसां प्रोक्तन्तोयमपेयवत्।
तदुत्सर्गः प्रकर्त्तव्यो निजवित्तानुसारतः॥
वित्तशाठ्यं प्रकुर्वं स्यादित्यब्रवीत् पराशरः।
तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः॥
तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह।
सतोयं स तु कर्त्तव्यः प्रतिधर्मविवृद्धये॥
विपरीतमतिर्यः स्यात् तत्कृतं कर्म निष्फलम्।
तटाकपालिपृष्ठेतु मण्डपं तत्र कारयेत्॥
पूर्वोत्तरद्भवे देशे शुभे शौचसमाहितः।
चतुरस्रं चतुर्द्वारं दशहस्तप्रमाणतः॥
स्तम्भहस्तप्रमाणेन तोरणानि तु कारयेत्।
कार्याः विचित्राः पताका नानावर्णाः समन्ततः॥

शुभपल्लवसंयुक्ता द्वारेषु कलशाः स्मृताः।
यथावर्णं यथाकाष्ठं यथाकार्य्यं प्रमाणतः॥
तथा यूपान् प्रवक्ष्यामि सर्वेषां हितकाम्यया।
पालाशो ब्राह्मणस्योक्तो न्यग्रोधः क्षत्रियस्य च॥
बैल्वो वैश्यस्य यूपः स्याच्छूद्रस्योदुम्बरः स्मृतः।
शिरः प्रमाणं विप्रस्य स्यात्कण्ठं क्षत्रियस्य च॥
उरःप्रमाणं वैश्यस्य शूद्रस्य नाभिमात्रकम्।
पूर्वस्य दक्षिणे भागे तोरणं तत्र कारयेत्॥
ब्रह्मस्थानञ्च तन्मध्ये अष्टौ भागाः प्रकीर्त्तिताः।
तेषामुत्तरतः सोमं कुबेरं कुविदङ्गतम्॥
धनदं धननागेति ईशावास्येति शङ्करम्।
आकृष्णेनेत्यादिमन्त्रैश्च स्वैः स्वैः कल्प्यास्तथा ग्रहाः॥
त्रातारमिन्द्रमितीन्द्रं अग्निदं ते च पावकम्।
अग्निमूर्द्धेत्यादि धर्मज्ञो द्विजोत्तमः॥
तद्विष्णोरिति वै विष्णुं नमः सूक्तेति नैऋतम्।
सप्त ऋषय इत्यादि मन्त्रेण सप्त ऋषिस्तथा॥
वरुणस्योत्तम्भनमसि वरुणन्तु प्रकल्पयेत्।
एतद्वा विंशतिः स्थाप्या निमन्त्रिताः पृथक् पृथक्॥
इमं मे वरुणमन्त्रेण स्नात्वा यामि त्वनुत्तमम्।
समुद्रोऽसि समुद्रेति त्रीन् समुद्रानिति स्मृति॥
दशवारुणमन्त्रैस्तु आहुतीनां शतद्वयम्।
अष्टशतं शतं वापि विंशमष्टोत्तरं शतम्॥
गोसहस्रशतं वापि शतार्द्धं वा प्रदीयते।
अलाभे चैव गां दद्यादेकामपि पयस्विनीम्॥

अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम्।
सौवर्णा राजतास्ताम्राः कांस्याः सीसाश्च शक्तितः॥
मत्स्यनक्रादयः कार्य्या विविधाः पूर्ववद्द्वये।
गोवत्सौ वस्त्रबद्धौ च आग्नेय्यां दिशि संस्थितौ॥
वायव्यभिमुखौ तत्र तारयेद्वारिमध्यतः।
वस्त्रकुम्भानि विः स्थाप्य क्वचित्कामुद्रिकां शुभाम्॥
शक्त्यान्वितैः प्रदातव्यं विप्रान् प्रसाद्य भक्तितः।
दद्याद्विप्रेभ्यः सम्बोध्य कृतोपानहमेव च॥
सुहेम पुरुषसंयुक्तां शय्यां दद्याच्च शक्तितः।
आसनानि च शस्तानि भाजनानि निवेदयेत्॥
एतत्प्रदक्षिणीकृत्य स्वात्मना च विपश्चितः।
प्रसादयेद्विजान् भक्त्या इष्टापूर्त्तं फलं नरः॥
कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः।
ब्रूयादेवं भवन्तोऽत्र सर्वे विप्रवपुर्धराः॥
तद्यूयं तारयध्वं मां संसारार्णवतो द्विजाः!॥
आगता मम पुण्येन पूर्वपुण्यप्रसाधकाः।
कूर्मश्च मकरांश्चैव सौवर्णं तत्र कारयेत्॥
मीनश्च राजतश्चैव ताम्रदर्दुरकाः स्मृताः।
जलकुम्भचराद्यांश्च सैन्धवांस्तत्र प्रकल्पयेत्।
अन्ये च जलजास्तत्र शक्त्या ताम्रान् प्रकल्पयेत्॥
इमं पुण्यं पवित्रञ्च तटाकादिविधिं नरः।
खातयित्वा तटागानि स्वभावात् सम्प्रवर्जिताः॥
मानवः क्रीडते स्वर्गे यावदिन्द्राश्चतुर्दश।
एतद्विधानं विदधाति भक्त्या सर्वेषु खानेषु तड़ागकेषु।

सर्वैश्च कामैः परिपूर्णदेहो भुङ्क्ते धरित्र्यामपि सर्वभोगान् ॥
वदान्ति केचिद् वरुणस्य लोके प्रयाति लोकान् वरुणस्य कुम्भि ।
संपूज्यतां तत्र पुनर्धरित्र्यां नरेन्द्रतामेति पराशरोक्तिः ॥

इति श्रीवृहत्पाराशरीये शान्त्यध्याये वापीकूपतटागादि शान्तिविधिः समाप्तः ।

---

अथातः सम्प्रवक्ष्यामि नरेन्द्राः ! श्रूयतामयम् ।
लक्षहोमविधिः पुण्यः कोटिहोमविधि स्तथा ॥
स्वयम्भूर्येमुवाच प्राक् यस्तत्तातपितामहः ।
तमिमं सम्प्रवक्ष्यामि श्रूयतां पापनाशनम् ॥
ये चेह ब्राह्मणाः कार्य्याः भूमिर्यावच्च मण्डपम् ।
समिधो याश्च मन्त्राश्च अन्यच्च तत्र यज्ञवित् ॥
लक्षहोमविधिं विप्राः ! कथ्यमानं निबोधत ।
युग्माश्च ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः ॥
नियमव्रतसम्पन्ना मण्डिताः पार्थिवेन तु ।
नित्यं जपपराश्चैव नियोज्यास्ताहृशा द्विजाः ॥
कन्दमूलफलाहाराः दधिक्षीराशिनोऽपि वा ।
प्रागुदक् पूर्वदेशेषु समे स्थण्डिलमेव च ॥
तत्र वेदिं च कुर्वीत पञ्चहस्तसमन्वितम् ।
दक्षिणोत्तर आयामे त्रिंशत्तु पूर्वपश्चिमे ॥
कुण्डानि खनितव्यानि षडङ्गुल्या नैकविंशतिम् ।
निधापयेद्धिरण्यञ्च रत्नानि विविधानि च ॥
सिकता परिदेयाश्च तत्राप्यग्निं समिन्धयेत् ।
आज्यभागाहुतीर्हुत्वा न वाहुत्या च संस्मरेत् ॥

अग्निं सोमञ्च सूर्य्यञ्च विष्णुञ्चैव प्रजापतिम् ।
विश्वेदेवान् महेन्द्रञ्च मित्रं स्विष्टिकृतं तथा ॥
दधिमधुघृताक्तानां समिधाञ्चैव यज्ञिनाम् ।
होमयेच्च सहस्रञ्च तत्र चैव यथाक्रमम् ॥
चतुर्विंशति गायत्र्या मानस्तोकेति षड् तथा ।
विंशच्छताभिमन्त्रैश्च चत्वारि विष्णुदैवतैः ॥
कुष्माण्डैर्जुहुयात्तञ्च विकिरेद्वाश्च षोड़श ।
जुहुयाद्दशसहस्राणि जातवेदस इत्यृचे ॥
पञ्चसहस्राणि जुहुयात् जुहुयादिन्द्रदैवतैः ।
कुर्य्यात् शतसहस्रे तु अभिषेकन्तु कारयेत् ॥
रुद्राभिषेकं यत्प्रोक्तं तदुक्तापि शुभप्रदम् ॥
अथवा षोड़शं कुम्भैः सहिरण्यैः समङ्गलैः ।
सर्व्वौषधिसमायुक्तैः सर्व्वरत्नविभूषितैः ॥
अभिषेकं ततस्तस्मिन् प्रधाना दक्षिणाः स्मृताः ।
हयाश्वरथयानानि भूमिवस्त्रे युगानि च ॥
अजञ्च गोशतं हेम ऋत्विजाञ्चैव दक्षिणाम् ।
तथानेकादशैवात्र दश दद्याच्च धेनवः ॥
अशक्त्या वा प्रदद्यादुगां वित्तशाठ्यं विवर्जयेत् ।
एवं कृते तु यत्किञ्चिद् ग्रहपीड़ासमुद्भवम् ॥
भौममाकाशजं वापि असद्वा यदि जायते ।
तत्सर्व्वं कृच्छ्रहोमेन प्रशमं यात्यसंशयम् ॥
शान्तिर्भवति पुष्टिश्च बलं तेजः प्रवर्द्धते ।
दृष्टिर्भवति राष्ट्रे च सर्व्वोपद्रवसंक्षयः ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे दशहोमविधिः सम्पूर्णः ॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः!।
श्रूयतामादरेणायं सर्वकामफलप्रदः॥
सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजा यागकर्मणि।
विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये।
कार्यश्चैव विशेषेण ग्रहयागं बुधिर्विदः!॥
एकाङ्गविकलो विप्रो धनधान्यापहारकः।
सर्वाङ्गविकलो यस्तु यजमानं स हिंसति॥
वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रविद्विज!।
कार्यश्चैव विशेषेण ग्रहयज्ञश्च विद्द्विजैः॥
ग्रहाः फलन्तु साङ्गाश्च सुराश्चैव नरेश्वराः!।
अघोर्ध्वं येच मन्त्राणां कृत्वा चाष्टोत्तरं शतम्॥
स एव ऋत्विग्विज्ञेयः सर्वकामफलप्रदः।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः॥
एवं कृते तु यत्किञ्चिद्दुष्टग्रहपीडासमुद्भवम्।
तत्सर्वं नाशयेत्येव कृतघ्नः सौहृदं यथा॥
अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च॥
पूर्ववद्ग्रहदेवाना मावाहनविसर्जने।
होममन्त्रास्त एवोक्ताः स्नानदानस्तथैव च॥
मण्डपश्चैव वेद्याश्च विशेषश्च निबोधत।
कोटिहोमे चतुर्हस्तं चतुर्हस्तायतं पुनः॥
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम्।
द्व्यङ्गुलाद्युतकार्यास्तु प्रथमा मेखला बुधैः॥
त्र्यङ्गुलैरद्युतातद्वद्द्वितीया मेखला स्मृता।

द्व्यङ्गुले मेखला या तु तृतीया चतुरङ्गुला ॥
द्व्यङ्गुलस्तत्र विस्तारः पूर्वयोरेव शस्यते।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
कूर्मपृष्ठोन्नतं मध्ये पार्श्वतश्चाङ्गुलोच्छ्रिता।
गजोष्ठसदृशा तद्वदायामाच्छिद्रसंयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते।
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभाम् ॥
वेदीच कोटिहोमे स्यात्मण्डपस्य चतुर्मुखः।
पूर्वद्वारेऽपि संस्थाप्य बहृचं वेदपारगम् ॥
यजुर्वेदस्तथा याम्ये पश्चिमे सामवेदिनम्।
अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः।
एवं द्वादशविप्राणां वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत् पूजयेद्भक्त्या सर्वाभरणभूषितैः।
रात्रिसूक्तञ्च रौद्रञ्च पावमानन्तु मङ्गलम् ॥
पूर्वतो बहृचः शान्तिं पठमानोऽप्युदङ्मुखम्।
सौक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम्।
सौवर्णमथ वै राज्य माग्नेयीं रुद्रसंहिताम् ॥
ज्येष्ठसामन्तथा शान्तिं छन्दोगं पश्चिमे जपेत्।
पञ्चभिः सप्तभिर्वाथ होमः कार्यश्च पूर्ववत् ॥
स्नाने दाने च मन्त्राः स्युस्तएव द्विजसत्तमाः ॥
वसोर्धाराविधानन्तु लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत्।

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
यः पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः ।
सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति ॥
अश्वमेधसहस्राणि दश चाष्टौ च धर्मवित् ।
कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥

प्रपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान् ।
उद्धृत्य नाकं स नयेद्धि सर्वान्यो लक्षहोमे नृपतीरतः स्यात् ।
राष्ट्रं मनोवाञ्छितहृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम् ।
निर्द्वन्द्वनीरोगमदस्य तस्माद्भूयो लक्षकोटीहवनं विदध्यात् ॥
यो लक्षहोमं विदधाति भूभृत् तस्माच्च लक्षं शतहोमकः स्यात् ।
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजयं धरित्रीम् ॥
यो ब्रह्मघाती गुरुदारगोऽपि ग्रामादिदाहोद्भवपापयुक्तः ।
राजा स मुक्तः शतलक्षहोमाग्निः शेषपापैर्विबुधत्वमेति ।
तस्मात्तदा भूपतयो विदध्युर्बुधैः प्रजासौख्यबलस्य पुष्ट्यै ।
आयुःप्रवृद्धौ विजयाय कीर्त्यै लक्षस्य कोटिं ग्रहयागमेतम् ।

इति श्रीबृहत्पाराशरीये कोटिहोमः सम्पूर्णः ॥

---

अथो अन्यत्प्रवक्ष्यामि विधिं स्नापनमुत्तमम् ।
अशक्तात्प्रतातोऽयं रघुकुलाय धीमते ॥
अनपत्यस्य पुत्रार्थं कुर्याद्वैभाविकं स्वयम् ।
सहस्रशीर्षसूक्तस्य विधानस्वरूपाकम् ॥

येयं कृतं नृपैः पूर्वैरन्यैरपि द्विजोत्तमैः।
उपासितन्तु सद्भक्त्या श्रोत्रियैर्वेदपारगैः॥
आत्मविद्भिर्निराहारैर्व्रीहिभिर्मन्त्रउत्तमैः।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः॥
न पाठान्न धनात् स्नानात् नात्मनः प्रतिपादनात्।
प्रोक्तस्य कर्मणः पुंसां सर्वा भवन्ति सिद्धयः॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे।
द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम्॥
दम्पत्योरुपवासश्च एकादश्यां सुरालये।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम्॥
चरुं पुरुषसूक्तेन श्रपयेत् पुरुषकाम्यया।
प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः सन्ततिक्षमम्॥
द्वादश्यां द्वादश सम्यग् विधिवन्निर्वपेच्चरून्।
यः करोति द्रुतं याति स विष्णोः परमं पदम्॥
कृत्वाज्यं विधिवत्पूर्वं ऋग्भिः षोडशभिस्तथा।
समिधोऽश्वत्थवृक्षस्य कृत्वाज्यं जुहुयात् पुनः॥
उपस्थानं ततः कुर्यात् ध्यात्वाथ मधुसूदनम्।
हविर्होमं पुनः कृत्वा जुहुयाच्च हुताहुतीः॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम्।
संप्राश्य च हविःशेषं लघ्वासीत वशेद्गृहे॥
ततः कृत्वा इदं कर्म कर्त्तव्यं द्विजतर्पणम्।
रजःस्त्रीषु निवर्तेत यावद्गर्भं न विन्दति॥
असूता मृतपुत्रा वा यावत्कन्या प्रसूयते।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा॥

होमान्ते दक्षिणान्दद्यात् धेनुं वासस्तथा तिलान्।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा॥
यः सिद्धमन्त्रः सततं द्विजेन्द्राः! संपूज्य विष्णुं विधिवत्सुतीर्थे।
इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात्॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुषसूक्तविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि ग्रहमन्त्रोऽधिदैवतम्।
आर्षं छन्दश्च यज्ज्ञानात्कर्म स्यात्समलङ्कृतम्॥
आकृष्णेनेति मन्त्रेऽस्मिन्दैवत्यं सविता महत्।
ऋषिर्हिरण्यरूपाख्यं त्रिष्टुप्छन्दः प्रकीर्तितम्॥
आप्यायस्वेति सोमोऽत्र दैवतं गौतमो मुनिः।
गायत्रीछन्द उद्दिष्टं विनियोगो यथोदितम्॥
अग्निमूर्द्धेति मन्त्रोऽत्र दैवतं भौममुच्यते।
विरूपाक्षो मुनिर्धीमान् छन्दो गायत्र्य मिष्यते॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम्।
मुनिर्बुधश्च मन्त्रस्य त्रिष्टुप्छन्दः प्रकीर्तितम्॥
शुक्रत्वमिति चोत्यत्र शुक्र इत्यधिदैवतम्।
शुक्रस्यापि तथार्षञ्च विराट्छन्दः प्रकीर्तितम्॥
शन्नो देवीतिचेत्यत्र शनिर्दैवत मुच्यते।
सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्र्य मुच्यते॥
काण्डात्काण्डादिभिर्मन्त्रस्य राहुर्दैवत मुच्यते।
ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम्॥
केतुं कृण्वन्निति प्रोक्तं दैवतं केतुरेव हि।
मधुच्छन्दस आर्षञ्च गायत्र्यं छन्द एव हि॥

स्योना पृथिवीत्यत्र स्कन्दस्य देवता स्मृता।
इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः॥
आर्षं त्वत्सस्य चाप्यत्र त्रिष्टुप्छन्दः प्रकीर्त्तितम्।
यस्मिन्वृक्षेति स्चोऽत्र यमो वै देवता परा॥
ऋषिस्तु कुशलो नाम च्छन्दोऽनुष्टुप् स्मरेद्बुधः।
ब्रह्मजज्ञमित्यत्र च कालो दैवतकं महत्॥
मुनिर्यमानतुर्नाम त्रिष्टुप्छन्दो विधीयते।
आयाते मितिच स्यास्यां पितृगुप्तस्तु दैवतम्॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो स्मृतो बुधैः।
अग्निं दूतमितिस्य स्यादग्निर्वै देवता स्मृता॥
आर्षं मेधातिथिरत्र च्छन्दोगायत्र्यमेवं हि।
अस्यस्तु सोम इत्यत्र सोमं वै दैवतं स्मरेत्॥
मेधातिथिरिहाप्यत्रोऽनुष्टुप्छन्दस उच्यते।
भूतिपृथिव्यन्तरिक्ष मित्यत्र दैवतं स्थितः॥
ऋषिः शातातपः स्मृत्वा छन्दश्चानुष्टुप् कुवर्ण्यते।
पुरुषसूक्तस्य दैवत्यं पुरुषेच हितं बुधैः॥
आर्षं नारायणस्येह छन्दस्यानुष्टुबित्यपि।
इन्द्रोपिन्द्रो मरुत्वन्तो मरुत्वान्दैवतं महत्॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि।
मरुत्वमित्यत्रबुधैः सुरेन्द्रो देवता मता॥
अत्रापि काश्यपस्यार्षं गायत्र्य च्छन्दएव हि।
उत्तानपर्णे मित्यत्र इन्द्रो दैवत मुच्यते॥
आर्षं साङ्ख्यस्य चैवोक्तम् अनुष्टुप् छन्द इत्यपि।
प्रजापते इति स्यात्र देवता च प्रजापतिः॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः।
आयं गौरिति सूक्त देवता पूजने मता॥
सर्पराजमुनिस्त्वत्र गायत्र्यं छन्द इष्यते।
एष ब्रह्मा ऋत्विज इति ब्रह्मर्षिषोऽधिदैवतम्॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते।
आतृम्बन् इन्द्र इदन्नुत् सुरेन्द्रं धर्मणोश्वरः॥
वामदेवोह्यस्य आर्षं गायत्र्यच्छन्द इत्यपि।
जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥
कश्यपस्यार्षमत्रापि छन्दोऽनुष्टुप् प्रकीर्तितम्।
आनोनियुद्भिरित्यस्मिन् वायु दैवतमुच्यते॥
आर्षं ह्यत्र वसिष्ठस्य अनुष्टुप्छन्द एव हि।
नमः प्रजापदैवत्यं मुनिप्रोक्तं प्रजापतिः॥
गायत्र्यं छन्दसाश्वरं विनियोगो यथोचितम्
ईषो उपेति चात्यत्र अश्विनौ दैवते स्मरेत्॥
प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्।
मरुतो यस्य हिष्यस्य मरुद्दैवत मुच्यते॥
गौतमश्च मुनिर्विद्वन्! छन्दसः प्रथमं मुने!।
दैवत्य मार्षं मरुच्छन्दसां यो मत्वाद्दिजाग्राकुरुते विधान
वेदोक्तमर्थं भवतिस्म सर्वं सम्यक्फलं कर्म्मुमिहाप्यमुत्र॥
यो लक्षहोमं त्वथ कोटिहोमं राजा विदध्यात्प्रतिवर्षमेक
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य कर्त्तुः
भवन्ति पुत्राः शुभसन्तति समाश्चिरायुषो राजहिताभरि
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतु

इति श्रीवृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्या

# दशमोऽध्यायः।

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया।
पराशरोदितं विप्रा! वक्ष्यमाणं निबोधत॥
भूभृत् भूमा परो देवपूज्योऽसौ परदेवकः।
स विधाता च सर्वस्य रचिता शासितापि च॥
इन्द्रादियमवित्तेशवारीशमातरिश्वनः।
शीतांशुस्तीव्रभासश्च ब्रह्मादयो द्विजो नृपः॥
नृपो वेधा नृपः शम्भु र्नृपोऽर्को विष्टरश्रवाः।
दाता भर्त्ता नृपः कर्त्ता नृणां कर्मानुसारतः॥
नापृच्छेद्यदि राजानं दण्डं नाप्याचरिष्यतः।
नामास्या स्वमेष्यतिच नाभविष्यज्जगत्स्थितिः॥
नाग्रहिष्यन् पुरोडाशमनुष्यपितृदेवताः।
नाभविष्यत् स्वकाकानां भागधेयं हुतं हविः॥
विगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत्।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन्॥
स्वधर्मस्थान् नृपो लोका नन्यान् पुत्रानिवौरसान्।
शास्य धर्मविदो दण्ड मधर्मकारिणश्च तान्॥
दण्डधृतो नरान् कुर्य्याद्धर्मशास्त्रानार्थसाधकान्।
समर्थानश्वपत्यादौ शूरान् स्वामिहितोद्यतान्॥
शुचीन् प्राज्ञांश्च धर्मज्ञान् विप्रान् मुद्राकरान्वितान्।
लेखकानपि कायस्थान् लेख्यकृत्तु हितैषिणः॥
अमात्यान्मन्त्रिणो दूतान्यथोदितपुरोहितान्।
प्राड्विवाकं सभ्यकान्वा हितांश्च रक्षकानपि॥

शूरानथ शुचीन् प्राज्ञान्परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सतकृत्य वेदिनोऽपरे ॥
सदायत्तं कुमाराणा मन्तःपूरुषलक्षणम्।
वृद्धानशुचिनो विप्रां स्थुचीनननघान्व भीरुकान्।
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम् ॥
उद्वाहमुदितं स्त्रीणां यौवने बन्धुकारणात्।
पुरस्कृत्य च विद्वान मात्मरक्षा च यत्नतः ॥
प्रातः सन्ध्यार्चनादूर्द्धं गुडं पुंसवनं स्मृतम्।
यथोक्तकार्य्यं शाठ्ये च नित्यं कुर्य्यात् परीक्षणम् ॥
कोशेभाश्वरथादीनां क्षेतीनां वर्मणामपि।
कुर्य्याच्च दर्शनं नित्य मतन्द्रितो महीपतिः ॥
अमात्यमन्त्रयोक्तृणां सम्मन्त्रं नित्यशोऽपि च।
वेदार्थञ्च सदा होमशान्तिञ्च वृद्धसेवनम् ॥
यज्ञदानं तथोत्पातं समये शान्तयोऽपि च।
वर्जनं विषयासक्तो भूमिदानस्य शासनम् ॥
अरिवर्जितदेशे तु नीतिज्ञो मन्त्रकृद्भवेत्।
नित्यमुत्साहयुक्तः स्याद् विजिगीषु रुदायुधः ॥
रुदालङ्कारयुक्तश्च सदैव प्रियवाक्चयः।
सदाप्रियार्थिने युक्तः पूज्यो नाकेऽप्यसौ नृपः ॥
सदा साधुषु सम्मानं विपरीतेषु घातनम्।
दण्डं दण्ड्येषु कुर्वाणो राजेष्टफलमश्नुते ॥
वृद्धान् साधून् द्विजान् मौलान् यो न सम्मानयेन्नृपः
पिण्डं कुर्व्वीत नाभीषां भूभृत् क्षिप्रं क्षयं व्रजेत् ॥
यस्तु सम्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत् सोऽरातीनजेयोऽप्यपि जायते ॥
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धान्यैस्तृणैस्तथा तोयैश्च सम्पन्नं परमण्डलम् ॥
क्षीणवाहनपुंस्कान्तु मत्वा तत्प्रविशेन्नृपः।
माघे सहसि यात्रार्थी क्षतपुण्यश्च पोषवान् ॥
विधिवद्यानकं कुर्य्यात् सहार्थे रक्षयेद्बलम्।
यत्राचलशरीरत्वा दृश्यरक्षातु यत्र तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्वनं स्तकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्निधि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्।
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं संश्रयं द्वैधं सम्यक्ज्ञात्वा समाचरेत्।
निर्भेदं स्वबलं कुर्य्यात् हन्याच्च भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न यथेन्नृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत्।
परमात्मविधानानां व्यलीकच्छतशङ्कितम् ॥
उत्थापयेत् स्वसेनायाः स्याद्यताचित्तभेदिनः।
परसैन्ये बहून् पातान् विविधान् कुहकानपि ॥
करीषाङ्गरदानादि वह्निपातामनेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यमदुःखमान् मतं सर्वं निशामयेत् ॥

अन्तर्भौमम् बहिः शूरान् सात्त्विकान् ब्राह्मणोत्तमान् ।
धर्मज्ञान् कुलसम्भूतान् विदध्यादात्मसन्निधौ ॥
प्रविशेत्परदेशे तु प्रजां स्वीकृत्य संविशेत् ।
उत्साद्यं मार्गतो दूरीकृत्वापि मार्गतो व्रजेत् ॥
शस्यानि दाहयेत्सर्वं यवसानि धनानि च ।
भिन्द्यात्सर्वं निपानानि प्राकारं परिखां तथा ॥
अपमृत्युमुपादाय भूमिसाधारणां पुनः ।
गमयेद्वार्षिकान् मासानसौ च वसुधाधिपः ॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम् ।
न प्रभेदेन दानेन त्रिभिरेवं वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गतीः ।
तद्बलं वशमायाति यथा रिपुस्तथा श्रयेत् ॥
आक्रान्ता दुर्भसूर्य्योऽपि विद्युद्दृष्टप्रोपपातनम् ।
न तापित युक्ते च युद्धमिच्छो परसिंहवत् ॥
स्वस्यस्यात्ययिके देशे युद्धमिच्छेत् स्वधर्मवित् ।
ततः प्रविश्य तद्दूरं भूमियुद्धं समारभेत् ॥
किञ्चित् सुप्तेषु लोकेषु क्षपायां युद्धमुत्सृजेत् ।
तस्मीरवासतोवापि पीड़येत्परसैन्यकम् ॥
व्यूहैर्व्यूहयथोक्तैर्वा रक्षां कृत्वापि चात्मनः ।
सैन्यकांस्तान् समस्तांश्च नृपो युद्धाय प्रेषयेत् ॥
समानयेत् समस्तांश्च यो वसेदायतौ नृपः ।
अन्विच्छन् जयलक्ष्मीं तु नीतिज्ञः पृथिवीपतिः ॥
प्रपाद्येनापि पत्त्या च शस्त्राण्योऽपि च मानवः ।
पुष्पैरपि न युद्धेत युद्धं तत्र विपक्षये ॥

हीनं परबलं मत्वा निरुत्साहमनादरम्।
समसत्वसंयुक्तः स्वयमुत्थाप्य योधयेत्॥
न हन्यात् मुक्तकेशन्तु नाशयेन्न निरायुधम्।
पराङ्मुखस्य प्रहतं न तवास्मीति वादिनम्॥
अन्यानपि च विद्वांश्च न हन्यात् धर्मयुद्धकृत्।
हन्यान्नरकं याति भ्रूणहत्यासमेनसा॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते।
तस्य दानीष्टितुल्यानि भूत्यर्थमेकचेतसः॥
शिरोहतस्य ये वक्रे विशन्ति रक्तविन्दवः।
सोमदानेन तत्तुल्या इति वासिष्ठजोऽब्रवीत्॥
युद्धस्ते भूभृतो येच भूभ्यर्थं मेकचेतस.।
इष्टैस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टपम्॥
येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम्।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा॥
तदा तु वशतां याति स देशो न्यायतोऽर्जितः।
तद्देशव्यवहारेण यथावत्परिपालयेत्॥
रणार्जितेन वित्तेन राजा कुर्य्यान्मखान् द्विजान्।
अर्चयेद्विधिवद्विद्वान् सतान् सन्मानयेदपि॥
मातुलः श्वशुरो बन्धु रन्यो वापिच यो जितः।
अदण्ड्यः कोऽपि नो राजा राजनीतिविदो विदुः॥
सुसहायमग्रपादं शूरं प्रजानुरागदम्।
सोत्साहं विजिगीषुश्च भूभृत् क्षिप्रं निवेदयेत्॥
मत्वाचार्यवतः सर्वान् नियुक्तार्थमियुग्भवेत्।

सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि देवद्रव्याणि कोऽवत् ।
आदाय रक्ष चात्मान ततस्तत्र च तत् क्षिपेत् ॥
वित्तं वार्द्धुषिकाणान्तु कदर्यस्यापि यद्भवेत् ।
पाषण्डिगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपाषण्डिगणका गणिकादयः ।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
सप्तार्चिश्चाश्वगोमांसाम् यस्य दहत्यकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् यः पीड़येत् प्रजाः ॥
सोकं सोकन्तु फलकं मांसं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुर्नृपो नान्यैः कदाचिदभिभूयते ।
तदैवं हृदि सन्ध्यायन् निरुत्साहो नृपो भवेत् ॥
दैवपुरुषसंयोगे सर्वाः सिध्यन्ति सिद्धयः ॥
नैकेन चक्रेण रथः प्रयाति नचैकपक्षोऽत्र चयाति पक्षी ।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धिर्नरकारतो वा ॥
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणम् ।
पुंस्कारयुक्तस्य नरस्य केचिदप्यत्र दृष्टा पुरुषार्थसिद्धिः ।
सत्त्वद्यमी क्रियतएवच यः श्रमी च
शौर्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमप्यमात्रम् ॥

ुत्नाणि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
श्वर्यपतित्वञ्च नृकारता च सर्वं हि मत्त्वा च यमेति दैवात् ॥
विनां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः ।
यां प्रभुत्व बहुजीविताच एको हि दैवो बलवानतोऽत्र ॥
स्त्रीप्रयोगादथ युक्तयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
योगात्तु तत् विप्र ! नचापि पुंसां सर्वाणि चैषां मनुजेश्वरत्वम्
ासात्तु गर्भस्य न सम्भवोऽस्ति कामात्तु शुक्रं नतु वीर्य्यहीनम् ।
धृत गर्भोऽपि जहाति गर्भं काचिच्च गर्भं न बिभर्ति दैवात् ॥
ाता विधाता निजकर्मयोगाद्द विशेश्वभीष्टं त्वनुभावभाग्यम् ।
ारुणानां नच दैत्यकानां स ह्येव कर्त्ता तु मनूद्भवानाम् ॥
ात्मयोनाऽपि रुद्रस्तमज्ञां दैवाद्धिमांशोः क्षयरोगता च ।
ात्मयोधी लवणोदकत्वं दैवाद्धवेश्चित्रतरा च वृष्टिः ॥
यमुत्थं न परोऽस्ति दैवात् कुर्य्यात्तथापीह नरो नृकारम् ।
पयेत्कर्मकरो नृकाराद्दुद्दीपितं श्रीरिववै तनोति ।
केचिच्च हठेन केचित् केचिन् नृकारेण नरस्य चार्थः ।
न्ति यत्नेन विधीयमाना स्तेषां प्रधानं नरकारमाहुः ॥
प्रधानं त्वयदुर्गकोषान् दण्डञ्च मित्राणिच नीतियज्ञाः ।
नि राज्यस्य वदन्ति सप्त समाश्र्यूर्वो नृपतिर्धराभृत् ॥
सद्वृत्तनरेषु दण्डं राज्ञा विधेयं निपुणार्थसिद्ध्यै ।
श्च मत्वाऽर्जितवित्तसत्त्वात् हीनाथं पुंसाय दमन्ति हीनम् ।
यतो ये जननं जनेश्वराः संपीड्य वित्तानि नयन्ति लोभात् ।
ोधवह्नि परिदग्धकायाः क्षीणायुषस्ते तु भवन्ति भूपाः ।
महाम्मध्यकमध्यमस्तु मानन्तु तस्य त्रसरेणुकादि ॥
ति साहसाणपामहान् स्यादधादिके चैव तदर्धको वा ।

सर्वार्थपादस्य हरस्य दण्ड: पात्यो नृपेणेति वदन्ति सद्य:॥
पाण्यादिपाच्छेदनमारणाय निर्वासनं राष्ट्रतएव सद्य:।
ज्ञात्वापराधं मनुजस्य यस्तु देशञ्च कालञ्च वयोवपुश्च॥
दण्डेषु दण्डं विदधाति भूभृत्साम्यं स बध्नाति पुरन्दरस्य।
य: शास्त्रदृष्टेन यथा नरेश्वरो दण्डं विदध्याद्विधिवत्क्रमाच्च।
स चैवकीर्त्तिं वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान्।
यस्तूक्तमार्गाणि कुलानि राजा श्रेणीश्च जातीश्वरतांश्च लोका
द्यानीय मार्गे विदधाति धर्मे नागेशगीर्वाणगणै: प्रशस्यम्।
अन्यच्च वह्निर्जलवित्तनाथशीतांशुरूपाणि ह बिभ्रतीह॥
सर्वं च भूयस्त्विह रूपकस्य तत्तथ्यमानं शृणुत द्विजेन्द्रा:॥
यदा जिगीषुर्धृतशस्त्रपाणि: श्रियं समालम्ब्य स विक्रमेत्॥
सर्वान् सपत्नांश्च स हन्तुकामस्तदाग्निरूपं स्व इवावभाति।
आकारणात्कारणतोऽपि एष प्रजा हतेयं स सदृक्कीर्ति:॥
यदा तदैनं नृपतीति विज्ञास्तनूनपात्तं प्रवदन्ति भूपम्॥
धर्मासनस्थश्रुतिशास्त्रदृष्टा: शुभाशुभाचारविचारदक्षात्॥
धर्म्येषु दानं त्वथकृत्सु दण्डं यदावनीश: सच धर्मराज:।
धनप्रदानैन करोति हृष्टा भूभृत्तदासान्द्रविणेशवश्यान्॥
समस्तशीतांशुगुणप्रयोक्ता यदायदामेष शुभाय शास्येत्।
प्रसन्नमूर्त्तिर्गतमत्सर: सन् तदोच्यते सोम इव क्षितीश:॥
आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये त समस्तवश्य:
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोकै:॥
दुर्धर्षतीव्रांशुसमानदीप्तो ब्रूयान्मनुष्य: परुषं नृपस्य।
यस्तस्य तेजोऽप्यसमन्यमान्य: सद्य: स पञ्चत्व मुपैति पापात्

योऽङ्गाय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति।
कस्यापि चाज्ञां न बिभर्ति राजः
समस्तदेवांशभवोऽस्ति यस्मात्॥
यः स्वधर्मे स्थितो राजा प्रजां धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोकमवाप्नुयात्॥
इति श्रीहत्पारायशरीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यश्चौचाग्निकर्मकृत्॥
वन्यैर्मुन्यन्नैर्मेध्यैः श्यामनीवारकङ्गुभिः।
कन्दमूलफलैः शाकैः स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीवरवासा वै श्मश्रुलोमजटाधरः।
पितृंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनैवमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाप्यात्मचिन्तकः॥
सङ्कल्पस्वान्तको नित्य दानशील: सदा द्विजः।
किञ्चिद्धेतुं समाश्रित्य स वृत्त्या वर्तयेत्सदा॥
एकाह्रिकन्तु कुर्वीत मासैकश्चार्थसञ्चयम्।
षाण्मासिकश्चाब्दिकञ्च यथार्थं च वने वसेत्।
त्यक्त्वा तदाश्विने मासि चान्यं स्थानं समाचरेत्॥
यथावदग्निहोत्रं तु समिधाग्नौ च पालयेत्।

कृच्छ्रचान्द्रपराकाद्यैः पञ्चमासोपवासकैः ॥
त्रिरात्रैर्वैकरात्रैश्च आश्रमस्थः क्षपेत्तनुः ।
तिष्ठन्वाव्रतिकस्तत्र स्वपेदथ तथा निशि ॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत् ।
योगाभ्यासरतो नित्यं स्थानासनविहारवान् ॥
वसन्तग्रीष्मवर्षासु जलाग्न्याकाशमाश्रयेत् ॥
दन्तोलूखलिको वापि कालपक्वभुगेव च ।
स्थानाश्मकुट्टको विप्रः फलस्नेहैश्च कर्मकृत् ॥
शत्रौ मित्रे समः स्याच्च तथैव सुखदुःखयोः ।
समदृष्टिश्च सर्वेषु न विशेद्धनगह्वरम् ॥
म्लेच्छव्याप्तानि सर्वाणि वनानि हि कलौ युगे ।
न भूयः शासितारस्तु ग्रामोपान्ते वसेदतः ॥
ग्रामाच्च नगराद्देशात्तथारण्यवनानि च ।
नित्यं शरक्षितान्येव सर्वेषां फलदानि हि ॥
भूपतेः प्रथमं तत् स्यात् कृत्यं शंसेद्द्विजाग्रतः ।
यागं वाऽरण्यवासं वा कुर्याच्च तदनुज्ञया ॥
सुत्रामानलवायूनां यमस्येन्द्रविवस्वताम् ।
यदा वित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममौ नृपम् ॥
पारत्रिकन्तु यत्किञ्चित् यत्किञ्चिदैहिकं तथा ।
नृपाज्ञया द्विजातीनां तत्सर्वं सिद्ध्यति ध्रुवम् ॥
नृपतेः प्रथमं न स्यात् स वै द्विज ! मखादिकम् ।
रक्षार्थं कथयित्वा तु यथाकार्यं समापयेत् ॥
धेनुपूर्वं वशिष्ठस्य ह्यसौ दुर्वाससोऽपि च ।
वनवासाश्रमस्थस्य ह्यग्निकार्याय तां श्रयेत् ।

